

॥ श्रीः ॥

# ॥ भाट्टकल्पतरुः ॥



संगृहीतधनुर्बाणं जटावल्कलभूषणम् ।
सीतालक्ष्मणसंयुक्तं वन्दे वनचरं विभुम् ॥ १ ॥

वेषं सीता विशुद्धा जनकनृपसुता मध्यतोऽगादरण्ये
तस्याः सौमित्रिरग्रे प्रथितभुजबलः पृष्ठतो बद्धकच्छः ।
सव्यं चापं च कृत्वा विशिखमपि करे भ्रामयञ्शोभयन्गां
बिभ्राणस्त्वार्षवेषं हृदि स तु भगवान्पातु मे रामचन्द्रः ॥ २ ॥

श्रीभाट्टदीपिका नाम्ना खण्डदेवसुधीकृता ।
तट्टीकां रामसुब्बाख्यः करोम्यद्भुतदीपिकाम् ॥ ३ ॥

**अथातो धर्मजिज्ञासा** ॥ अथ वेदाध्ययनानन्तरम् अतः वेदाध्ययनस्य दृष्टार्थत्वाद्धेतोः धर्मजिज्ञासा साङ्गाध्ययनापातप्रतीतवेदार्थविषयकनिर्विचिकित्सज्ञानार्थं धर्मविचारः कर्तव्य इति सूत्रार्थः । अस्याधिकरणस्य धर्मजिज्ञासाशास्त्रोपक्रमपरतयोपोद्घातत्वात् श्रुतिशास्त्राध्यायपादसंगतयो नावश्यमपेक्षणीयाः । अनन्तरसंगतिस्त्वप्रसक्तैव । साक्षात्परम्परया वा श्रुत्यर्थविचारत्वं श्रुतिसंगतिः । अस्य शास्त्रस्य धर्मपरतया साक्षात्परम्परया वा धर्मविचारत्वं शास्त्रसंगतिः । प्रथमादिद्वादशाध्यायानां क्रमेण धर्मप्रमाणधर्मभेदाङ्गत्वप्रयुक्तिक्रमाधिकारसामान्यातिदेशविशेषातिदेशोहबाधतन्त्रप्रसङ्गविचाररूपत्वात्साक्षात्परम्परया वा तत्तदध्यायानां प्रमाणादिविचारत्वं तत्तदध्यायसंगतिः । विधिवाक्यविचारत्वं

चोदनापादसंगतिः। अर्थवादवाक्यविचारत्वमर्थवादपादसंगतिः। एवं तत्तत्पाद 'गतिरूह्या। अनन्तरसंगतिस्तु आक्षेपदृष्टान्तप्रत्युदाहरणावसरातिदेशप्रसङ्गा' वादसंगतिभेदात्सप्तधा। पूर्वाधिकरणसिद्धान्ताक्षेपेणोत्तराधिकरणपूर्वपक्षप्रसक्ताव क्षेपसंगतिः। पूर्वाधिकरणे येन हेतुना सिद्धान्तः कृतस्तज्जातीयेन हेतुनोत्त धिकरणपूर्वपक्षे दृष्टान्तसंगतिः। पूर्वाधिकरणसिद्धान्तहेतुविलक्षणहेतुना उत्त •धिकरणे तथाविधहेत्वभावेन वा पूर्वपक्षे प्रत्युदाहरणसंगतिः। पूर्वाधिकरणोत्तर वश्यवक्तव्यत्वेऽवसरसंगतिः। पूर्वाधिकरणपूर्वपक्षसिद्धान्तहेतुभ्यामेवोत्तराधिकरण पूर्वपक्षसिद्धान्तकरणेऽतिदेशसंगतिः। पूर्वाधिकरणसिद्धान्तादुपस्थितस्योत्तराधि करणे निरूपणे प्रसङ्गसंगतिः। प्रसङ्गसंगतिस्थले श्रुत्यादिसंगतयो नो क्षिताः। पूर्वाधिकरणसिद्धान्तस्योत्तराधिकरणसिद्धान्तेऽपवदनेऽपवादसंगतिः पादानामध्यायानां च परस्परसंगतिस्तूपजीव्योपजीवकभावादिरूपेत्यलम्। (पुरु र्थेति) पुरुषार्थेत्यर्थः। अङ्गानि व्याकरणादीनि। उपाङ्गानि मीमांसान्य यादीनि। तच्च, अध्ययनं च। भाव्याय, फलभूताय समधिगमशब्दित सम्यग्ज्ञानाय। धर्माधर्मज्ञानयोः सम्यक्त्वं च निर्विचिकित्सत्वम्। त संशयविपर्यासत्वशून्यत्वे सति संशयविपर्यासविरोधित्वम्। उपेक्षायामतिव्य प्तिवारणाय विशेष्यदलम्। संशयविपर्यासविरोधिसंशयविपर्यासान्तरेऽतिव्याप्ति वारणाय सत्यन्तम्। इदमेव निर्विचिकित्सज्ज्ञानं फलवदर्थज्ञानमित्युच्यते, अस्यै स्वविषयधर्मानुष्ठानद्वारा स्वर्गादिफलवत्त्वात्। अभ्यर्हिताम्, व्याकरणाद्यपेक्षया वेद र्थविचारत्वेन श्रेष्ठाम्। वेदान्ताचार्यकृतपाञ्चरात्ररक्षायां महाभारतस्थत्वेन धृते 'न शब्दशास्त्राभिरतस्य मोक्षो न चापि रम्यावसथप्रियस्य' इति वचनेन यथ व्याकरणस्य मोक्षविरोधिदुरितजनकाभिरतिविषयत्वमुक्तम्, 'आन्वीक्षिकीं तर्क विद्यामनुरक्तो निरर्थिकाम्' इति मोक्षधर्मवचनेन यथा न्यायवैशेषिकतर्कशास्त्र शृगालभावप्रयोजकदुरितहेत्वनुरागविषयत्वमुक्तम्, 'काव्यालापांश्च वर्जयेत इति स्मृत्या यथा काव्यनाटकयोर्वर्ज्यत्वमुक्तम्, तद्वत्केनापि संप्रतिपन्नप्रमाण वचनेन हेयत्वाकथनाद्वा श्रेष्ठामित्यर्थः। (षडङ्गमिति) विषयसंशयपूर्वोत्तरपक्षसंगति

प्रयोजनाख्यषडङ्गघटितमित्यर्थः । तत्र, षोडशलक्षणशास्त्रे । अत्र, जिज्ञासासूत्रे । परावर्तनम्, परावर्तनाधीनसिद्धिकं स्नानशब्दितं समावर्तनाख्यं कर्म । तथा च अध्ययनाव्यवहितोत्तरं समावर्तने ब्रह्मचर्याश्रमस्य नष्टत्वात् 'अनाश्रमी न तिष्ठेत क्षणमेकमपि द्विजः' इति वचनरीत्या दारपरिग्रहस्यावश्यिकत्वेन कृतदारस्याग्निहोत्रादिकर्मव्यग्रत्वात् गुरूपसत्त्यधीनधर्मविचारस्यासंभव इति भावः । अध्ययनविधितः, 'स्वाध्यायोऽध्येतव्यः' इति विधेः । अर्थज्ञानभाव्यकत्वावगमात्, अध्ययनस्यार्थज्ञानफलकत्वावगमात् । तत्सिद्धिः, विचारकर्तव्यत्वसिद्धिः । विचारं विनाध्ययनमात्रेण वेदार्थभूतधर्मस्वरूपादिविषयकज्ञानरूपभाव्यासिद्ध्या विचारस्य कर्तव्यत्वसिद्धिरिति न चेत्यादि तत्सिद्धिरिति शङ्काग्रन्थाभिप्रायः । तत्सिद्धिरित्यनन्तरमितीति पूरणीयम् । न चेत्यस्य तदुपर्यन्वयः । तत्सिद्धिरिति न चेति योजना ज्ञेया । अर्थज्ञानजनकत्वेनेत्यादेरतश्चेत्यन्तस्य ग्रन्थस्यात्रैवार्थवादाधिकरणेऽपि सत्त्वेन तद्ग्रन्थव्याख्यानं तत्रैव करिष्यते । (उपोद्घातः संगतिरिति) एतदधिकरणधर्मजिज्ञासाशास्त्रयोरित्यादिः । प्रकृतसिद्ध्यर्थचिन्ता उपोद्घातः । (स्पष्टमिति) निर्विचिकित्सधर्मज्ञानस्य विचारसाध्यत्वात्तज्ज्ञानं प्रयोजनमिति स्पष्टमित्यर्थः । (अनुबन्धचतुष्टयसिद्धिरिति) निर्विचिकित्ससपरिकरधर्मज्ञानं प्रयोजनम्, तत्कामोऽधिकारी, सपरिकरधर्मो विषयः, प्रतिपाद्यप्रतिपादकभावः संबन्ध इत्यनुबन्धचतुष्टयसिद्धिरित्यर्थः ॥ १ ॥

लक्षणप्रमाणयोरभावान्न विचार्यो धर्म इत्याशङ्कापरिहारादस्य पूर्वाधिकरणेनाक्षेपिकी संगतिः । **चोदनालक्षणोऽर्थो धर्मः** ॥ चोदना परप्रवृत्त्यनुकूलः प्रवर्तनाप्रेरणाविध्यपरपर्यायो व्यापारः, 'देवदत्तो यज्ञदत्तं चोदयति न स्वात्मानम्' इति परप्रवृत्त्यनुकूलव्यापार एव चोदयतेः प्रयोगबाहुल्यात् । चोदनावाचकलिङादौ तद्घटितवाक्ये च परप्रवृत्त्यनुकूलव्यापाररूढचोदनाशब्दो निरूढः पार्थशब्द इवार्जुने । लक्ष्यतेऽनेनेति लक्षणम् । चोदना 'अग्निहोत्रं जुहुयात्' इत्यादिविधिवाक्यं लक्षणं ज्ञापकं यस्याग्निहोत्रादेः स चोदनालक्षणः । अर्थ्यते साध्यते फलमनेनेत्यर्थः । उक्तपदाभ्यां फलसाधनत्वेन विधिवाक्यबोधित-

इत्यर्थः पर्यवसितः । तथा च यो धर्मः स चोदनालक्षणोऽर्थ इति योजना। चोदनासूत्रं धर्मलक्षणपरम्, यश्चोदनालक्षणोऽर्थः स धर्म इति योजनायां च विषये चोदना प्रमाणमिति प्रमाणपरं सूत्रमित्युभयमपि सूत्रार्थः । (अत एव) धर्माधर्मयोर्वेदप्रमाणज्ञातत्वादेवेत्यर्थः । तथात्वे सति, वेदज्ञाप्येष्टसाधनताक सति । उपादेयता, उद्देश्यताख्यविषयताभिन्ना या प्रवर्तनाविषयकृतिनिरूपित विषयता सा । तच्च, विधीयमानत्वं च । कृतिव्याप्यः, कृतिविषयः । (संसर्गात्मकत्वमिति) निर्विशेषब्रह्मणः संसर्गरूपवाक्यार्थानन्वयित्वाद्धर्मत्वाभावेन न तस्य विचार्यत्वमिति भावः ॥ २ ॥

**तस्य निमित्तपरीष्टिः** ॥ इदं सूत्रं सत्संप्रयोगसूत्रोत्थापक तच्छेषभूतम् । तस्य धर्मज्ञानस्य यन्निमित्तं हेतुः तस्य परीष्टिः परीक्षा विचार क्रियत इति सूत्रार्थः ॥ ३ ॥

**सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षम निमित्तं विद्यमानोपलम्भनत्वात्** ॥ धर्मस्य प्रत्यक्षवेद्यत्वाच्चोदनामात्र प्रमाणकत्वोक्तिरयुक्तेत्याक्षेपपरिहारादाक्षेपिकी संगतिः । पुरुषस्येन्द्रियाणां पुरुष संबन्धिचक्षुरादीनां सत्संप्रयोगे सता वर्तमानेन विषयेण संप्रयोगे संनिकर्षे सति, येन चक्षुरादिना बुद्धिजन्म ज्ञानोत्पत्तिः, तत्प्रत्यक्षं प्रत्यक्षपदेन व्यपदेश्यं तत् अनिमित्तं धर्मविषयकज्ञानजनकं न भवति । कुतः? विद्यमानोपलम्भनत्वात् प्रत्यक्षस्य वर्तमानसंनिकृष्टार्थविषयकज्ञानजनकत्वात् धर्मस्य च ज्ञानोत्तरकाले पुरुषकृतिनिष्पाद्यत्वेन इन्द्रियजन्यज्ञानकालेऽवर्तमानत्वादिति सूत्रार्थः । वृत्तिविशेषरूपौ, मनःपरिणामविशेषौ । तेषाम्, योगिनाम् । एतेन, ईश्वरानङ्गीकारेण । व्याख्यातम्, पराहतम् । प्रमितेः, प्रत्यक्षज्ञानस्य ॥ ४ ॥

यदुक्तं चोदनाया धर्मे प्रमाणत्वं तन्न संभवति, पुरुषाधीनसंकेतरूपशब्दार्थसंबन्धाख्यशक्तिविषयकग्रहसापेक्षबोधजनकत्वेन चोदनायाः पुंतन्त्रतया पुरुषस्य च प्रायेण भ्रमादिग्रस्तत्वेन चोदनावाक्यस्य भ्रान्तिमत्पुरुषसापेक्षत्वादित्याक्षेपस्यात्र परिहारादाक्षेपिकी संगतिः । **औत्पत्तिकस्तु शब्दस्यार्थेन संबन्ध-**

**तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे शब्दः प्रमाणं बादरायणस्यानपेक्षत्वात् ॥** शब्दस्यार्थेन संबन्धः शक्तिरूपः औत्पत्तिकः स्वाभाविकः न तु डित्थादिशब्दानामिव पुरुषप्रयत्नाधीनः, येन चोदनाशब्दस्य पुरुषसापेक्षतया अप्रामाण्यमाशङ्क्येत। अतः तस्य धर्मस्य ज्ञानं ज्ञायतेऽनेनेति व्युत्पत्त्या धर्मविषयकज्ञानजनकं ज्ञानम् उपदेशः चोदनात्मकशब्दः, अव्यतिरेकः न विद्यते व्यतिरेको यस्य सोऽव्यतिरेकः प्रमाणत्वव्यतिरेकशून्यः, प्रमाणमिति यावत्। चो हेतौ। यस्माच्छब्दार्थसंबन्धस्य भ्रान्तिमत्पुरुषसापेक्षत्वाभावात् अनुपलब्धेऽर्थे अज्ञातार्थे शब्दः प्रमाणमिति बादरायणस्य मदाचार्यस्य वेदव्यासस्य मतम्, तस्माच्चोदना प्रमाणमिति सूत्रार्थः। विसंवादेन, बाधेन। यज्ञात्मकसाधनपरतया, यज्ञश्चासावायुधश्चेति कर्मधारयेण यज्ञायुधीपदस्य यज्ञाभिन्नसाधनप्रवृत्तिनिमित्तकतयेत्यर्थः। यद्यपि 'न कर्मधारयान्मत्वर्थीयः—' इति कर्मधारयपक्षे यज्ञायुधीति मत्वर्थीयः प्रत्ययो न भवति, यज्ञस्यायुधं शरीरमिति तत्पुरुषपक्षे तु स संभवति, तथापि 'कृष्णसर्पवान्वल्मीकः' इति महाभाष्यज्ञापकबलात्संभवतीति भावः। (अव्यवहितकालकालान्तरयोरिति) चित्रेष्ट्यव्यवहितकालविशिष्टपशुं प्रति चित्रेष्टेः कारणत्वे कालान्तरीयपशुरूपफलं प्रति तस्या जनकता न स्यात्, अव्यवहितकाले यत्र पशुर्न दृश्यते तत्र कारणस्य व्यभिचारश्च स्यात्। व्यवहितकालविशिष्टपशुं प्रति तस्याः कारणत्वे यत्र प्रतिबन्धकाभाववशात्संनिहितकाले पशुफलं तत्र व्यभिचारः स्यात्। अन्यतरकालावच्छिन्नपशुं प्रति तस्या जनकत्वे अनेकपदार्थघटितस्यान्यतरत्वस्य कार्यतावच्छेदककोटिप्रवेश एव दोषः स्यात्। पशुत्वमात्रावच्छिन्नं प्रति तस्या जनकत्वे गोदोहनरूपगुणजन्यपशौ पशुत्वरूपकार्यतावच्छेदकाक्रान्ते चित्रेष्टिरूपकारणाभावेन व्यभिचारः स्यात्। न चाव्यवहितोत्तरत्वसंबन्धेन चित्रेष्टिविशिष्टपशुं प्रति चित्रेष्टिः कारणमिति विवक्षया व्यभिचारपरिहारः, तदव्यवहितोत्तरं तत्फलानियमात्। तथापि वैजात्यविशेषस्य कार्यतावच्छेदकत्वान्न दोष इति भावः। संबन्धस्यापीत्यपिशब्देन शब्दार्थयोरनादित्वं सूचितम् ॥ ५ ॥

शब्दसंबन्धस्य नित्यत्वोक्तौ शब्दस्य संबन्धिनोऽपि बुद्धौ प्रसक्तत्वात्तद्विचारोऽत्र क्रियत इति प्रासङ्गिकी संगतिः। **कर्मैके तत्र दर्शनात्** ॥ क्रियत इति कर्म कृतिविषयः, शब्दः कृतिविषयः अनित्यः स्यादिति यावत्। कुतः? तत्र घटादिशब्दोच्चारणकाल एव घटादिशब्ददर्शनादिति पूर्वपक्षसूत्रार्थः। **समं तु तत्र दर्शनम्** ॥ तुशब्दः पूर्वपक्षं व्यावर्तयति। तत्र उच्चारणकाल एव गकारादेर्दर्शनमुत्पत्तिसाधकं तवाभिमतम्; तदेव मम सिद्धान्तिनः नित्यस्य गकारादेरभिव्यक्तिसाधकमिति सिद्धान्तसूत्रार्थः। तच्च, अभिव्यञ्जकं च। रथन्तरादिरूपः, रथन्तराख्यसामगीतिरूपः ॥ ६ ॥

**उत्पत्तौ वावचनाः स्युरर्थस्यातन्निमित्तत्वात्** ॥ पदरूपशब्दे विचारिते प्रसङ्गाद्वाक्यशब्दो विचार्यते। उत्पत्तौ पदपदार्थसंबन्धस्य नित्यत्वेऽपि वाक्यवाक्यार्थयोः संबन्धस्य पुंबुद्धिप्रभवत्वे अवचनाः चोदनाः न पदपदार्थव्यतिरिक्तमबाधितं वाक्यार्थं वक्तुं समर्थाः स्युः, अर्थस्य पदार्थव्यतिरिक्तवाक्यार्थस्य अतन्निमित्तत्वात्, तत् पदं निमित्तं प्रत्यायकं यस्य स तन्निमित्तः, न तन्निमित्तोऽतन्निमित्तस्तत्त्वात्, चोदनावाक्यं वाक्यार्थांशेऽप्रमाणमिति पूर्वपक्षसूत्रार्थः।

**तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात्** ॥ तद्भूतानां तेषु पदेषु वर्तमानानामर्थानां क्रियार्थेन, क्रिया धात्वर्थः अर्थः कार्यं यस्याख्यातार्थप्रयत्नस्य स क्रियार्थ आख्यातार्थः आर्थी भावनेति यावत्, तया समाम्नायः अन्वयः, अर्थस्य अन्वयरूपवाक्यार्थस्य तन्निमित्तत्वात् स्वस्वार्थप्रतीतिद्वारा पदाधीनान्वयधीविषयत्वात्; वाक्यार्थे पुंतन्त्रत्वाभावेन तदंशे चोदनावाक्यं प्रमाणमिति सिद्धान्तसूत्रार्थः। सूत्रे क्रिययेत्युक्तौ क्रियाशब्दितधात्वर्थेन समं पदार्थान्वय इति धीः स्यात्, सा मा भूदिति क्रियार्थेनेत्युक्तम्। न च क्रिया चासावर्थश्चेति कर्मधारये क्रियार्थ इति पदेनापि क्रियैवोच्यत इति शङ्क्यम्; धात्वर्थस्य क्रियापदमात्रेण लाभे अर्थपदनिर्देशस्य सूत्रे वैयर्थ्यापत्तेः। तस्मादाख्यातार्थ एव मुख्यविशेष्यं न धात्वर्थ इति जैमिनेरभिप्राय इति सिद्धम्। तद्ग्रहसापेक्षतया, संकेतग्रहसापेक्षतया। (वक्त्रिच्छाघटितेति) एतदर्थप्रतीतीच्छया

इदं वाक्यमुच्चरितमित्येवंरूपतात्पर्यघटकत्वं वक्त्रिच्छाया इति भावः । ऐकान्तिकम्, नियमेन । स्वबोध्यसंबन्धरूपया, स्वयोग्यसंबन्धरूपया । तदानन्त्यप्रयुक्तः, प्रवर्तनावाक्यीयभावनाबोधानन्त्यप्रयोज्यः । संबन्धाग्रहः, स्वयोग्यसंबन्धाग्रहः । (तात्पर्यग्राहकश्चेति) केवलार्थज्ञानस्याध्ययनं विनापि सिद्धेः तत्तद्वाक्यगततात्पर्यविषयीभूतार्थज्ञानोद्देशेनैवाध्ययनस्य विधेयतया तत्तद्वाक्यगतं तात्पर्यं किंचिदस्तीत्यध्ययनविधिना सिध्यतीत्यर्थः । सापि, तत्र चान्यत्र च प्राप्तिरपि । अत एव, उक्तप्राप्तेर्लक्षणघटकत्वाभावादेव । (आक्षेपत इति) तुषविमोचनान्यथानुपपत्तिप्रमाणत इत्यर्थः ॥ ७ ॥

यच्चोदनाया बोधकत्वलक्षणं प्रामाण्यं समर्थितं सा वेदैकदेशः; वेदस्यैवाप्रामाण्ये कथं तस्याः प्रामाण्यमित्याक्षेपस्यात्र परिहारादाक्षेपिकी संगतिः । **वेदांश्चैके संनिकर्षं पुरुषाख्याः** ॥ एके कणादादयः वेदान् संनिकर्षं संनिकृष्टकालं गमयन्ति, पुंविशेषबुद्धिप्रभववाक्यसमूहरूपं वेदं कल्पयन्तीति यावत् । चो हेतौ । यस्मात् पुरुषाख्याः 'काठकम्' 'कालापकम्' इति कठादिपुरुषनिर्मितमित्याद्यर्थकपुरुषघटितसमाख्याः वेदे दृश्यन्ते तस्मादिति पूर्वपक्षसूत्रार्थः । **उक्तं तु शब्दपूर्वत्वम्** ॥ तुः पूर्वपक्षव्यवच्छेदार्थः । धर्मस्य वेदशब्दपूर्वकत्वमुक्तमिति सिद्धान्तसूत्रार्थः ॥ पूर्वपक्षिहेतुं निरस्यति सूत्रकारः— **आख्या प्रवचनात्** ॥ काठकादिसमाख्या न कर्तृतानिमित्ता, किं तु प्रवचनात् प्रवचननिमित्तैव; अतो न वेदस्यानित्यत्वमिति सूत्रार्थः । तथात्वापत्तेः, अपौरुषेयत्वापत्तेः । तदधीना, वेदाधीना । मन्त्रवर्णविरोधात्, उक्तमन्त्रवर्णे भगवतो वेदकर्तृत्वोक्त्या तद्विरुद्धार्थकतेपानश्रुतेः तेपानेभ्यो वेदप्रकाशनार्थत्वमेवेत्यभिप्रायः । अत एव, अपौरुषेयत्वरूपं यद्भ्रान्तिशून्यभगवत्कर्तृकत्वं तस्मादेव । भ्रान्तिस्तु चतुर्मुखादिसाधारणी, भगवतस्तु न भ्रान्तिरिति भावः । (श्रुतिरिति) 'छन्दांसि—' इत्यादिश्रुतिरित्यर्थः ॥ ८ ॥

इति भाट्टकल्पतर्वभिधायां भाट्टदीपिकाव्याख्यायां प्रथमाध्यायस्य
प्रथमः पादः ।

## द्वितीयः पादः ।

**आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते** ॥ यद्यप्यस्मिन्पादे चतुर्थाधिकरणे मन्त्रप्रामाण्यविचारकरणादस्य पादस्य मन्त्रपाद इति व्यवहारः स्यादिति भवेदाशङ्का, तथाप्यस्य पादस्यार्थवाद-विचाराधिकरणभूयस्त्वादर्थवादपाद इति व्यवहारो न मन्त्रपाद इति । एतत्पूर्व-चोदनापादसिद्धधर्मस्वरूपमुपजीव्य तत्प्राशस्त्यप्रतिपादनपरार्थवादविचारतयास्य पादस्य पूर्वपादेनोपजीव्योपजीवकभावः संगतिः । पूर्वाधिकरणे वेदस्य धर्मविषये प्रामाण्यं समर्थितम्, तदयुक्तं वेदैकदेशार्थवादवाक्यस्य धर्मप्रामाण्यासंभवादि-त्याक्षेपस्यात्र परिहारादाक्षेपिक्यनन्तरसंगतिः । आम्नायस्य वेदस्य क्रियार्थत्वात् अंशत्रयविशिष्टभावनाप्रतिपादकत्वात् अतदर्थानाम् अक्रियार्थानाम् 'वायुर्वै क्षेपिष्ठा' इत्यादीनाम् आनर्थक्यम् अर्थशून्यत्वम्, तस्मात् आनर्थक्यात् अनित्यम् अप्रमाण-मुच्यतेऽर्थवादवाक्यमिति पूर्वपक्षसूत्रार्थः । **विधिना त्वेकवाक्यत्वा-त्स्तुत्यर्थेन विधीनां स्युः** ॥ विधिना विधिवाक्येन अर्थवादवाक्यानामेक-वाक्यत्वात् विधीनाम् विधीयत इति विधिः, विधीयमानानां यागहोमादीनां योऽपेक्षितः स्तुत्यर्थः प्राशस्त्यरूपः तेन द्वारेण अर्थवादाः धर्मे प्रमाणं स्युरिति सिद्धान्तसूत्रार्थः । तद्वदेव, विधिप्रतिषेधवदेव । सदसद्रूपसिद्धार्थेत्यत्र सिद्धपदं भावनातदंशत्रयातिरिक्तपरम् । तेनासतः सिद्धार्थरूपत्वाभावेऽपि न क्षतिः । तद-संभवेऽपि, धर्माधर्मप्रतिपादनासंभवेऽपि । तदसंभवात्, लक्षणाध्याहारासंभवात् । तत्कल्पनम्, लक्षणादिकल्पनम् । तस्यापि, तात्पर्यस्यापि । नियमे, 'यत्र यत्र प्रमाणत्वं शाब्दत्वं वा तत्र तत्र प्रयोजनवदर्थविषयकत्वम्' इति व्याप्यव्यापकभाव इत्यर्थः । स एव, नियम एव । व्यभिचारात्, 'लोष्टमस्ति' इत्यादौ प्रयोजन-वदर्थविषयकत्वरूपसाध्याभाववति प्रमाणत्वशाब्दत्वयोः सत्त्वेन व्यभिचारात् । किमध्ययनस्य यथाश्रुतार्थज्ञानोद्देशेन विधानम्, उत तदुद्देशेनाध्ययननियम-विधानम्, आहोस्विदव्यभिचरितक्रतुसंबन्धियथाश्रुतार्थज्ञानद्वारा तद्द्वारा पर्णताया इव क्रतूद्देशेनाध्ययनविधानमिति [illegible]भिप्रेतमिति विकल्प्य दूषयति—

। ज्ञानजनकत्वेनेत्यादिना न विधेयत्वमित्यन्तेन । लोकसिद्धत्वेन, 'यत्र यत्र क्रतुसंबन्धेनाध्ययनं तत्र तत्र जनकतासंबन्धेनार्थज्ञानं तदभावे तदभावः' इत्यन्वयव्यतिरेकरूपलोकप्रसिद्धत्वेन । अविधेयत्वात्, अन्वयव्यतिरेकरूपप्रमाणासिद्धत्वेन विध्यनर्हत्वात् । तन्नियमस्य, अध्ययननियमस्य । अर्थज्ञाने अनुपयोगात्, अर्थज्ञाननिरूपितजनकत्वासंभवात् । अव्यभिचरितक्रतुसंबन्धाभावेन, अर्थज्ञानस्य क्रतोरन्यत्र विजयादिष्वपि सत्त्वेन व्यभिचारितया । क्रतुं यावत्, क्रतुं प्रति । अतः, स्वरीत्या अध्ययनविध्यसंभवात् । (स्वर्गाद्यर्थमध्ययनं विधीयत इति ।) 'स्वाध्यायोऽध्येतव्यः' इति वाक्येनेति शेषः । विश्वजिन्न्यायात्स्वर्गः फलं कल्प्यते । स्वाध्याय इति प्रथमा करणत्वार्था । अध्येतव्य इत्यस्याध्ययनेनेष्टं भावयेदित्यर्थः । स्वाध्यायकरणिका अध्ययनकरणिका यत्किंचिदिष्टात्मकस्वर्गभाव्यका भावना प्रवर्तनाविषय इति बोधः । स्वाध्यायकरणत्वस्याध्ययननिरूपितत्वं पार्ष्ठिकबोधलभ्यम् । पूर्वप्रवृत्त्यङ्गीकारेण, अन्वयव्यतिरेकरूपप्रमाणात्पूर्वमध्ययनविधिमङ्गीकृत्य । यथाश्रुतार्थज्ञानम्, श्रुतमनतिक्रम्य जायमानमापातत्वानापातत्वान्यतरवज्ज्ञानम् । अस्मिन्पक्षे स्वर्गस्थाने यथाश्रुतार्थज्ञानम् 'दृष्टे संभवत्यदृष्टकल्पनाया अन्याय्यत्वात्' इति न्यायेन विवक्षितम् । बोधः प्राग्वत् । अध्ययनमेव भावनायां भाव्यमस्तु । स्वाध्याय इति प्रथमार्थः करणत्वम् । अध्येतव्यः, अध्ययनं भावयेत् । स्वाध्यायकरणिका अध्ययनभाव्यका भावना प्रवर्तनाविषय इति बोधः । पूर्वपक्षत्यागेनैतत्पक्षग्रहणे 'स्ववाक्याघटकफलापेक्षया स्वघटकफलकल्पनं न्याय्यम्' इति न्यायो बीजम् । इष्टभाव्यकत्वाभावात्, अध्ययनस्य सुखरूपत्वाभावेन तद्भाव्यकभावनाया इष्टभाव्यकत्वासंभवात् । भारहारः, भारवाही । प्रयोजनवदर्थज्ञानोद्देशेन, निर्विचिकित्ससपरिकरधर्मज्ञानोद्देशेन । प्रत्ययेन, तव्यप्रत्ययेन । (लक्षणयेति ।) तव्यप्रत्ययस्य विधौ शक्त्यभावान्निरूढलक्षणयेत्यर्थः । तथा च स्वाध्याय इति प्रथमा करणत्वार्था । अध्येतव्यः अध्ययनेन भावयेत् । स्वाध्यायकरणिका अध्ययनकरणिका प्रयोजनवदर्थज्ञानभाव्यका भावना प्रवर्तनाविषय इति बोधः । पार्ष्ठिकबोधमादाय स्वाध्यायकरणत्वविशिष्टाध्ययनस्य

उक्तज्ञानोद्देशेन विधिः पर्यवसितः। अस्मिन्पक्षेऽध्ययनं प्रधानकर्मेति भावः। अध्ययनमात्रमिति मात्रपदेनाध्ययने स्वाध्यायवैशिष्ट्यव्यवच्छेदः, तव्यप्रत्ययेन स्वाध्यायस्य कर्मत्वाभिधानात् उद्देश्यत्वाभिधानात्। पूर्वकल्पे श्रुतमुद्देश्यं त्यक्त्वा अश्रुतस्य तस्य कल्पनं प्रथमायास्तृतीयार्थकल्पनं कर्मप्रत्ययस्य कर्मानभिधायकत्वं च दोषाः, अस्मिन्कल्पे स्वाध्यायपदस्यैकस्यैव फलवदर्थज्ञानसाधनीभूतस्वाध्याये लक्षणा, तव्यप्रत्ययस्यार्थभावनायां शब्दभावनायां च निरूढलक्षणा कल्पद्वयेऽपि समाना। कर्मप्रत्ययार्थकर्मणः स्वाध्यायस्य चाभेदबोधः पार्ष्ठिकः। तथा च स्वनिष्ठकर्मतानिरूपकत्वसंबन्धेन निरुक्तस्वाध्यायविशिष्टाध्ययनकरणिका भावना प्रवर्तनाविषय इति बोधः। अध्ययनं च गुणकर्मेति भावः। (न तु प्रवृत्तिप्रयोजकत्वमपीति।) प्रयोजकव्यापारत्वस्य शक्यतावच्छेदकत्वं स्वीकृत्य प्रवृत्तिप्रयोजकत्वस्य तद्घटकत्वं न कल्पनीयमिति भावः। क्षेपिष्ठत्वादिगुणैरित्यत्र तृतीयार्थो घटितत्वम्; तस्य च लक्षणाशब्दार्थे प्राशस्त्यनिष्ठे क्षेपिष्ठत्वादिगुणाश्रयवायुदेवताकत्वसामानाधिकरण्यरूपसंबन्धेऽन्वयः। (गौणीगम्येति।) यजमानपदनिरूपितगौणीवृत्तिलभ्येत्यर्थः। क्षेपिष्ठा, शीघ्रगामिनी। भागधेयेन, चरुपुरोडाशादिना। शेषं विषयवाक्यमतिरोहितार्थम् ॥ १ ॥

अर्थवादत्वेन प्रसिद्धस्य सर्वस्य वाक्यस्य स्तावकत्वेन प्रामाण्योक्तिरयुक्ता, 'ऊर्जोऽवरुद्ध्यै' इत्यस्यार्थवादत्वेन व्यवहृतस्य फलविधित्वेन स्तावकत्वासंभवादित्याक्षेपिकी संगतिः। **विधिर्वा स्यादपूर्वत्वाद्वादमात्रं ह्यनर्थकम्** ॥ 'ऊर्जोऽवरुद्ध्यै' इत्येतद्विधिः स्यात् ऊर्गवरोधे उदुम्बरसाध्यत्वस्य प्रमाणान्तरानवगतत्वात् यस्माद्वादमात्रमर्थवादमात्रमनर्थकं प्रयोजनशून्यमिति पूर्वपक्षसूत्रार्थः। **विधौ च वाक्यभेदः स्यात्** ॥ 'औदुम्बरो यूपो भवति' इत्यादावूर्गवरोधोद्देशेनौदुम्बरत्वविधौ स्वीक्रियमाणे अत्यन्तसंनिहितयूपस्यापि संनिहितत्यागे कारणाभावेन उद्देश्यत्वावश्यकतया उद्देश्यानेकत्वप्रयुक्तवाक्यभेदः स्यात् आश्रयस्य प्राकरणिकस्याभावात् आश्रयतया यूपस्य औदुम्बरत्वेन उदुम्बरस्य च ऊर्गवरोधोद्देशेन विधाने विधेयानेकत्वप्रयुक्तवाक्यभेदः

स्यात्; तस्मात् 'ऊर्वै' इत्यादिवत् 'ऊर्जोऽवरुद्ध्यै' इत्यप्यर्थवाद एवेति सिद्धान्तसूत्रार्थः । 'पशून्' इति द्वितीयया, 'कर्तुरीप्सिततमं कर्म' इति सूत्ररीत्या द्वितीयार्थस्येप्सितत्वघटितत्वे इच्छाविषयत्वरूपभाव्यत्वं संभवति पशूनामिति भावः । (चतुर्थ्या वेति ।) 'तथायुक्तं चानीप्सितम्' इति सूत्ररीत्या अनीप्सितस्य द्वितीयार्थकर्मत्वसंभवान्न द्वितीयया भाव्यत्वं सिध्यतीत्यालोचने 'सर्वेभ्यो ज्योतिष्टोमः' इतिवच्चतुर्थ्या तल्लाभ इति भावः । ('उर्जा' इति तृतीययेति ।) यद्यपीयं तृतीया अर्थवादस्था, तथाप्यौदुम्बरत्वस्य साधनत्वे गमकं भवतीत्यर्थः । (शक्त्यैव वेति ।) आख्याततया आख्यातस्यार्थभावनाशक्तत्वेन भूधातूत्तरत्वापराधमात्रेण शक्तिर्न हीयते येन लक्षणा कल्प्या स्यादिति भावः । (लेट्त्वानिश्चयादिति ।) लेट्त्वे लिङर्थविधिसंभव इति भावः । (यूपकर्तृकभवनाक्षिप्ता भावनेति ।) 'यत्कर्तृकभवनाक्षिप्ता या भावना सा तद्भाव्यका' इति न्यायादिति भावः । (कामशब्दस्याभावादिति ।) 'सर्वेभ्यः—' इति वाक्ये चतुर्थ्या अगत्या फलत्वसमर्पणेऽपि 'विप्राय गां ददाति' इत्यादौ तदभावान्न चतुर्थ्याः कामशब्दवद्भाव्यसमर्पकत्वमिति भावः । तथानुपस्थितेः, यथा कामशब्दो मुख्यवृत्त्या भाव्यं समर्पयति न तथा चतुर्थी । आश्रयत्वे, जन्यत्वे सति फलभिन्नत्वमाश्रयत्वम्, जनकत्वमाश्रितत्वमिति विवेकः । 'मृन्मयो घटो भवति' इत्यनेन मृदा घटः संपद्यत इत्यर्थप्रतीतिवत् 'औदुम्बरो यूपो भवति' इत्यनेन उदुम्बरेण यूपः संपादनीय इत्यर्थप्रतीतिः सर्वसिद्धा । विहितौदुम्बरत्वस्य स्तुतिद्वारा प्राशस्त्यसमर्पकः 'ऊर्वै—' इत्यादिः । वैशब्दः प्रसिद्धौ । ऊर्क् अन्नपर्यायं बोध्यम् । 'ऊर्क्' इति प्रथमान्तम् । 'ऊर्जैव' इति तृतीयान्तेन विवरणम् । अस्मै यजमानाय । यजमानस्येति यावत् । 'ऊर्जम्' इति द्वितीयान्तं तृतीयान्तं बोध्यम् । पशूनाप्नोति; यजमान इति शेषः ॥ २ ॥

अर्थवादत्वेन प्रसिद्धस्य 'तेन ह्यन्नम्—' इत्यस्य हेतुविधित्वसंभवादर्थवादमात्रस्य स्तावकत्वमित्याक्षेपिकी संगतिः । **हेतुर्वा स्यादर्थवत्त्वोपपत्तिभ्याम्** ॥ उक्तवाक्ये हिशब्दोक्तहेतुविधिः स्यात्, तदानीं हिशब्दस्य प्रयो-

मनर्थत्वमुपपत्तिरूपव्याप्त्याख्यहेतुत्ववाचित्वं च समञ्जसं स्यादिति पूर्वपक्षसूत्रार्थः।
**स्तुतिस्तु शब्दपूर्वत्वादचोदना च तस्य** ॥ तुरेत्यर्थे । यद्यत्करणं तेन तेन होतव्यमिति हेतुविधिर्न संभवति, तस्य शूर्पहोमसाधनत्वस्य 'शूर्पेण जुहोति' इति शब्देन शूर्पपरामर्शितेनेतिशब्देन च ज्ञातत्वात् । चो हेतौ । यस्माद्दर्वीपिठरादिषु अचोदना विधायकशब्दो नास्ति तस्मात् । तथा च श्रौतशूर्परूपसाधनस्याश्रौतदर्वीपिठरादिसाधनैर्विकल्पासंभवात्तत्फलकहेतुविधिर्न संभवति, किं तु 'तेन ह्यन्नम्' इत्यादिर्विहितशूर्पार्थवादरूपा स्तुतिरिति सिद्धान्तसूत्रार्थः। (भाव्यत्व इवेति।) भाव्यत्वबोधार्थं यथा द्वितीयायाश्चतुर्थ्या वा भाव्यत्वे लक्षणा कल्पनीया तथेत्यर्थः । हेतुत्वाभिधानात्, ज्ञापकत्वाभिधानात् । (व्याप्तिमन्तरेणानुपपन्न इति।) ज्ञापकत्वस्य ज्ञानजनकज्ञाननिष्ठविषयितानिरूपकव्याप्तिपक्षधर्मतावैशिष्ट्यरूपस्य स्वघटकव्याप्तिमन्तरेणानुपपत्तेरिति भावः। (व्याप्तिवचनं कल्पयतीति।) अत्र वचनपदस्य प्रयोजनं यद्यपि नास्ति, तथापि 'व्याप्यस्य वचनं पूर्वं व्यापकस्य ततः परम्' इति न्यायशास्त्ररीतिमनुसृत्य तदुक्तमित्यवगन्तव्यम् । (उपलक्षणमिति।) लक्षणया अन्नसाधनसामान्यपरमित्यर्थः। अवयुत्य। इदमव्ययम्; बहुषु वक्तव्येषु सत्स्वेकस्य कथनं तदर्थः । (वर्तमानान्नकरणत्वस्येति।) लोके लटः शब्दप्रयोगाधिकरणक्षणवाचित्वेऽपि वेदे तदभावात्समभिव्याहृतक्रियाकालस्य लड्वाच्यतया होमकालकत्वमन्नकरणस्य वाच्यम्; तच्च न संभवतीति भावः। विधौ, विधिवाक्ये। (यद्यपि चेति।) अर्थवादेन गुणिनिष्ठगुणाभिधानरूपस्तुतिजननानन्तरमेव प्राशस्त्यलक्षणा वक्तव्या, स्तुतिरूपप्रयोजकाभावे प्राशस्त्यज्ञानरूपप्राशस्त्यासिद्ध्या गुणिनिष्ठगुणाभिधानरूपशाब्दबोधस्यार्थवादेन प्रथममुत्पादनीयत्वेन तस्याबाधितविषयकत्वसिद्ध्यर्थं लटो भविष्यदर्थे लक्षणा सिद्धान्तिनोऽप्यावश्यकीति भावः। (अनुवादस्थत्वादिति।) लटो लोकसिद्धार्थानुवादक— 'तेन ह्यन्नं क्रियते'— इति वाक्यस्थत्वादित्यर्थः । प्राशस्त्योपपादकत्वाच्च, प्राशस्त्यज्ञानहेतुभूतगुणिनिष्ठगुणाभिधानात्मकशाब्दबोधेऽबाधितविषयकत्वोपपादकत्वाच्च । तदप्रतीतेः, स्वविषयकशाब्दज्ञानद्वारा प्रीतिजनकगुणिनिष्ठगुणस्याप्रतीतेः । इदं तु बोध्यम्—

हेतुर्विधिपक्षे 'क्रियते' इति लटो भविष्यदर्थलक्षणापत्तिर्दोष इति भाट्टदीपिकोक्ति-रयुक्ता, 'औदुम्बरो यूपो भवति' इत्यत्र लेट्त्वस्य भाट्टदीपिकायामुक्तत्वेनात्रापि लेट्त्वसंभवेन लक्षणाया अप्रसक्तेरिति प्रथमा कक्ष्या । प्राथमिकलकारमतिक्रम्य पञ्चमलकारत्वकल्पनानौचित्याल्लट्त्वावश्यकतया लक्षणा अर्थाबाधायावश्यिकीति द्वितीया । तर्हि 'औदुम्बरो यूपः' इत्यत्रापि लट्त्वापत्तिरिति तृतीया । 'औदुम्बरः' इत्यत्रापूर्वार्थत्वाल्लकारस्य विधित्वावश्यकतया लेट्त्वमिति चतुर्थी । अत्राप्यप्र-करणत्वे होमनिरूपितहेतुत्वस्याप्यपूर्वतया तुल्यत्वादिति पञ्चमी । अपेक्षित-प्राशस्त्यपरत्वे संभवति नानपेक्षितहेतुपरत्वं युक्तमिति युक्तिरेव प्रकृते पूर्वपक्ष-निरासिका, उक्तलक्षणादोषस्तु प्रौढतयोक्त इति षष्ठी । तर्हि 'अधस्तात्समिधं धारयन्ननुद्रवेत्' इत्यधोधारणसंनिहितविध्यपेक्षितप्राशस्त्यपरत्वस्य 'उपरि हि देवेभ्यो धारयति' इति हिशब्दलट्प्रत्ययघटितवाक्ये संभवेन तद्वाक्यस्योपरि-धारणविधिसमर्थनपर– 'विधिस्तु धारणेऽपूर्वत्वात्'– इतिसूत्रविरोध इति सप्तमी । विषयवाक्यं स्पष्टार्थम् ॥ ३ ॥

'तेन ह्यन्नम्' इत्यादेः प्राशस्त्यरूपदृष्टार्थत्वमुक्तम्, तद्वन्मन्त्रस्य दृष्टार्थ-त्वासंभवाददृष्टार्थत्वं स्यादिति प्रत्युदाहरणसंगतिः । **तदर्थशास्त्रात्** ॥ योऽर्थो मन्त्रस्य तस्मिन्नर्थे 'उरु प्रथस्वेति पुरोडाशं प्रथयति' इति विधिवाक्ये 'उरु प्रथस्व' इति मन्त्रस्य विनियोगशासनान्मन्त्रोच्चारणमदृष्टार्थमेव; दृष्टार्थ-त्वेदृष्टार्थस्यार्थप्रकाशनरूपस्य मन्त्रस्वभावादेव सिद्धतया उक्तविनियोगशास्त्रवैयर्थ्य-मिति पूर्वपक्षसूत्रार्थः । **अविशिष्टस्तु वाक्यार्थः** ॥ तुः पूर्वपक्षव्यावृत्त्यर्थः लोकवेदयोर्वाक्यार्थः अविशिष्टोऽभिन्नः, अतो लोके वाक्यस्य 'गामानय' इत्यादेरर्थप्रकाशनं दृष्टं प्रयोजनम्, तथा वेदेऽपि मन्त्रशब्दोच्चारणस्यार्थप्रकाश दृष्टं प्रयोजनम्, नादृष्टमन्यत्संभवति दृष्टे कल्पयितुं युक्तमिति सिद्धान्त-सूत्रार्थः । 'उरु प्रथस्वेति पुरोडाशं प्रथयति' इति वाक्यस्य गतिमा सूत्रकारः— **अर्थवादो वा** ॥ 'यज्ञपतिमेव प्रथयति' इत्यर्थवादालम्बन मन्त्रसामर्थ्यसिद्धस्य पुरोडाशप्रथनरूपार्थस्य वादः 'उरु प्रथस्वेति पुरोडा

प्रथयति' इत्यादिरिति सूत्रार्थः। तेषाम्, अर्थवादानाम्। (पदैकवाक्यत्वादिति।) प्राशस्त्यमित्येकपदेन यत्प्राशस्त्यं बोध्यते तस्मिन्नर्थवादगतपदसमूहस्य एकया लक्षणावृत्त्या वर्तनात्पदत्वम्; तद्वतोऽर्थवादवाक्यस्य भावनान्वितस्वार्थप्राशस्त्यधी-जनकत्वं पदैकवाक्यत्वम्। पदैकवाक्यत्वं च घटमिति पदस्य आनयेति पदेन 'घटमानय' इत्यव्यवधाननिर्देश एव दृष्टं न त्वसंबद्धार्थकपदव्यवधाने। अतोऽर्थ-वादस्य विध्यव्यवहितत्वात्तेन पदैकवाक्यत्वमिति भावः। स्वातन्त्र्येण, भावनेति-कर्तव्यतात्वं विना। (पदार्थविधयेति।) प्राशस्त्यमित्येकपदबोध्यं यत्प्राशस्त्यं तेन रूपेणेत्यर्थः। (अर्थस्मारकत्वेनेति।) विधिवाक्यादंशत्रयविशिष्टभावनासंबन्धितया प्रतीता ये द्रव्यदेवतादयोऽर्थाः तत्स्मृतिजनकत्वेनेत्यर्थः। (प्रामाण्यमिति।) मन्त्रेण जायमानायां यामादिरूपधर्मसंबन्धिदेवतादिस्मृतौ धर्मस्यापि विषयत्वाद्धर्मे प्रामा-ण्यमिति भावः। (याथार्थ्यस्येति।) अनधिगतत्वाघटितस्याबाधितार्थविषयकज्ञान-जनकस्वरूपप्रामाण्यस्येत्यर्थः। (नियतमन्त्राम्नानेति।) नियतं प्रयोगकालव्यापकं यन्मन्त्राणामाम्नानमुच्चारणं तेनेत्यर्थः। (उच्चारणौपयिकप्रयोगप्राशुभावफलकत-येति।) उच्चारणमौपयिकं कारणं यस्य स चासौ प्रयोगः, तस्य प्राशुभाव इति व्युत्पत्तिः। प्राशुभावः शैघ्र्यम्। प्रयोगः पौर्वापर्यप्रतियोगित्वानुयोगित्वादिना अङ्गप्रधानयावत्पदार्थविषयिणी या कृतिः तदधीनो व्यापारविशेषः अनुष्ठान-संज्ञकः। उच्चारणस्यौपयिक उच्चारणौपयिकः स चासौ प्रयोगश्चेति विग्रहो न संभवति, प्रयोगस्योच्चारणं प्रति कारणत्वाभावादिति भावः। तद्बलेन, पाठबलेन। गुणपरिसंख्यार्थत्वेन, गुणार्थत्वेन परिसंख्यार्थत्वेन च। (अर्थप्राप्त इति।) स्थण्डि-लनिष्पत्त्यर्थकेष्टकानिष्पत्तिसाधनमृदाहरणान्यथानुपपत्तिरूपार्थात्प्राप्त इत्यर्थः। अभ्र्यादाने, अभ्रिः मृत्खननसाधनलोहकाष्ठोभयमयो वस्तुविशेषः तद्ग्रहण इत्यर्थः। (समुच्चयेति।) उच्चारणक्रियायां चतुर्णां मन्त्राणां साहित्यं समुच्चयः। (प्रापक-प्रमाणस्येति।) मांसभक्षणेच्छाया इत्यर्थः। तत्, त्रैदोष्यम्। न तत्, न त्रैदोष्यम्। अत एव, त्रैदोष्याभावादेव। अत एव, उक्तप्राप्त्यघटितत्वादेव। अत एव, परिसं-ख्याविधेरयोगव्यवच्छेदफलकत्वशून्यत्वे सत्यन्यनिवृत्तिफलकत्वादेव। (प्रकार्थ-

विधेयेति ।) प्रामाण्यमिति शेषः । स्वाध्यायविध्युपपत्तेः, 'स्वाध्यायोऽध्येतव्यः' इति फलसाधनीभूतस्वाध्यायोद्देशेन विहिताध्ययनविधिपरिगृहीतत्वेन मन्त्रभागस्याप्यध्ययनोपपत्तेः। (अर्थवादवत्स्पष्टमिति ।) यथा अर्थवादाधिगतप्राशस्त्यज्ञानाधीनानुष्ठानेन फलसिद्धिः तथा मन्त्राधीनार्थस्मरणाधीनप्रयोगात्फलसिद्धिः, नोपायान्तराधीनार्थज्ञानाधीनप्रयोगात्प्रयोजनसिद्धिरित्यर्थः ॥ ४ ॥

इति भाट्टकल्पतरुभिधायां भाट्टदीपिकाव्याख्यायां प्रथमाध्यायस्य

द्वितीयः पादः ।

## तृतीयः पादः ।

अर्थवादस्य विधेयस्तावकत्वेन स्वार्थतात्पर्याभावेन स्मृतिमूलत्वाभावेऽपि सार्थवादस्य विधेस्तन्मूलत्वेनार्थवादोपजीव्यत्वादर्थवादस्मृतिपादयोः संगतिः । मन्त्रभागस्येतिहासाख्यस्मृतिमूलत्वान्मन्त्रनिरूपणानंन्तर्यमस्य पादस्य । नामधेयांशस्यामूलत्वान्न तदानन्तर्यम् । यद्यप्यस्मिन्पादे स्मृतिप्रामाण्यवदाचारप्रामाण्यमपि विचारितमस्ति, तथापि तत्प्रामाण्यस्य स्मृतिरूपमूलकल्पनापेक्षायाः सत्त्वात्स्मृतेः प्राधान्यात्स्मृतिपाद इति व्यवहारः नाचारपाद इति । भवतु मन्त्राणां प्रामाण्यमपौरुषेयवेदैकदेशत्वात्, स्मृतेस्तु पौरुषेयतया न प्रामाण्यमिति पूर्वाधिकरणेनास्य प्रत्युदाहरणसंगतिः । **धर्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यात्** ॥ धर्मस्य वेदमूलकत्वात्, अशब्दम्, न विद्यते वेदशब्दो बोधकतया यस्य स्मार्तधर्मस्वरूपस्य तदशब्दम् अनपेक्षम् अप्रामाणिकमिति पूर्वपक्षसूत्रार्थः । **अपि वा कर्तृसामान्यात्प्रमाणमनुमानं स्यात्** ॥ अपि वेति पूर्वपक्षव्यावृत्तौ । कर्तृणां श्रुत्यर्थाग्निहोत्रस्मृत्युक्ताष्टकाश्राद्धकर्तृणां सामान्यात् एकत्वदर्शनात् अनुमानं स्मृतिः धर्माधर्मविषये प्रमाणमिति सिद्धान्तसूत्रार्थः । श्रुतेरिव स्मृतेरप्यर्थानुष्ठानरूपशिष्टत्रैवर्णिकपरिगृहीतत्वं प्रामाण्यप्रयोजकमिति सूत्राशयः । सन्मूलकत्वे, स्वतन्त्रप्रमाणमूलकत्वे । व्यासत्वेऽपि, संसृष्टत्वेऽपि । व्यासत्वाभावेन, मूलकत्वसंबन्धेन संसृष्टत्वाभावेन । मनोरप्यनुमेयत्वकल्पने,

अस्माकमिव स्वायंभुवमनुनापि मूलभूता श्रुतिरनुमेयेति स्वीकारे। तन्मूलकत्वम्, वेदमूलकत्वम्। तदज्ञानस्य, कारणाज्ञानस्य। शाखान्तरोपसंहारेण, स्वाध्यय-नायोग्यशाखान्तरार्थक्रोडीकारेण। अर्थवादोद्धारेण, अर्थवादपदस्वरससिद्धा-र्थोन्नीतश्रुत्यर्थोपहारेण। न्यायसिद्धार्थकथनेन, श्रुतिगतपौर्वापर्याभ्यासापूर्वत्वा-दिरूपन्यायसिद्धार्थकथनेन। अयं न्यायशब्दो न लौकिकयुक्तिपरः, तथात्वे स्मृतीनां श्रुत्युपस्थापकतयैव धर्माधर्मप्रयोजकत्वमित्यव्यवहितोत्तरग्रन्थविरो-धापत्तेः ॥ १ ॥

यथा श्रुतिमूलत्वानुमापकस्मृतित्वात् 'अष्टकाः कर्तव्याः' इति स्मृतिः प्रमाणं तथा तेनैव स्मृतित्वेन वेष्टनस्मृतिरपि प्रमाणं स्यादिति दृष्टान्तसं-गतिः ॥ **विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्** ॥ तुः पूर्व-पक्षव्यावृत्तौ। वेदविरोधे अनुमानशब्दितस्मृतिवचनमनपेक्षम् अप्रमाणम्, असति विरोधे प्रमाणमिति सूत्रार्थः। तत्कल्पने, प्रामाण्यकल्पने। परिच्छिन्नत्वात्, ज्ञातत्वात्॥ २ ॥

'वैसर्जनहोमीयम्—' इति स्मृतिः पूर्ववद्वेदविरोधाभावात्प्रमाणं स्या-दिति प्रत्युदाहरणसंगतिः। **हेतुदर्शनाच्च** ॥ चः पक्षव्यावृत्त्यर्थः। लोभरूप-हेतुमूलकत्वदर्शनात् वैसर्जनेति स्मृतिरप्रमाणमिति सूत्रार्थः ॥ ३ ॥

लोभमूलकत्वादिरूपाप्रामाण्यहेत्वभावात् 'अहिंसा परमो धर्मः' इति शाक्यवचनं प्रमाणं स्यादिति प्रत्युदाहरणसंगतिः। **शिष्टाकोपेऽविरुद्ध-मिति चेत्** ॥ वेदशिष्टेनार्थेन शाक्यवचनस्याकोपे विरोधाभावे अविरुद्धं शाक्यवचनमपि प्रमाणमिति चेदिति पूर्वपक्षसूत्रार्थः। **न शास्त्रपरिमाण-त्वात्** ॥ नेति पक्षव्यवच्छेदे। शास्त्रे धर्मप्रमाणस्य परिगणितत्वात् तत्र शाक्यवचनस्यापरिगणितत्वान्न तत्प्रमाणमिति सिद्धान्तसूत्रार्थः। (क्रमकालपरि-माणादिभिः।) क्रमः पौर्वापर्यम्, कालः पूर्वाह्णादिः, परिमाणं पदार्थानामियत्ता, तैः। वेदो दर्भमुष्टिविशेषः। वेदिः चतुरङ्गुलखाता भूमिः। अनुग्रहीतुम्, अन-तिक्रमितुम्। (यावत्प्रमाणेति।) श्रुतिस्मृतिरूपयावत्प्रमाणेत्यर्थः ॥ ४ ॥

वसन्तोत्सवाद्याचाराणां शाक्यवचनवत्प्रमाणग्रन्थेष्वलिखितत्वादप्रामाण्यमिति दृष्टान्तः संगतिः । **अपि वा कारणाग्रहे प्रयुक्तानि प्रयुञ्जीरन्** ॥ अपि वेति पक्षव्यावृत्तौ । प्रयुक्तानि 'तद्विदां च स्मृतिशीले, आचारश्चैव साधूनाम्' इति सामान्यरूपेण लिखितानि आचरणानि दृष्ट्वा अप्रामाण्यकारणाग्रहे सति प्रयुञ्जीरन् वसन्तोत्सवादीनि कुर्युरिति सूत्रार्थः । व्यतिक्रमः, श्रुतिस्मृत्यादिविरुद्धानुष्ठानम् । साहसम्, दर्शनदशायां भीतिहेतुभूतं भृगुपतनादि ॥ ५ ॥

आचारत्वेन प्रयोगरूपाचारस्याप्युपस्थितत्वात्प्रसङ्गसंगतिः । **तेष्वदर्शनाद्विरोधस्य समा विप्रतिपत्तिः स्यात्** ॥ आर्यम्लेच्छप्रयोगरूपयोः प्रसिद्ध्योर्यत्रार्थविषये विप्रतिपत्तिः तत्र म्लेच्छप्रसिद्धिरार्यप्रसिद्ध्या समा । तेषु प्रसिद्धिद्वयविषयीकृतेषु कङ्गुयवाद्यर्थेषु हर्यादिशब्दवद्वाचकयवादिशब्दस्य वृत्तिसंभवो न विरुध्यते विरोधस्यादर्शनादिति पूर्वपक्षसूत्रार्थः । **शास्त्रस्था वा तन्निमित्तत्वात्** ॥ शास्त्रे तिष्ठन्तीति शास्त्रस्थाः श्रुतिस्मृत्यध्ययनतदर्थग्रहणतत्प्रामाण्यबुद्ध्यास्तिक्यश्रद्धावन्त आर्याः, तेषां या प्रसिद्धिः शब्दप्रयोगोऽर्थविशेषे, सा प्रसिद्धिः शास्त्रस्थनिष्ठत्वाच्छास्त्रस्थेत्युच्यते । सैव प्रसिद्धिः शक्तिग्राहिका, शास्त्रस्थपदार्थज्ञानस्य तन्निमित्तत्वात् शास्त्रप्रसिद्धिनिमित्तकत्वादिति सिद्धान्तसूत्रार्थः । अविप्लुतिलिप्सया, अवैपरीत्यलिप्सया ॥ ६ ॥

म्लेच्छप्रसिद्धेः शक्तिग्राहकत्वाभावे आर्यप्रसिद्धिशून्यस्थलेऽपि तद्ग्राहकत्वं न स्यान्म्लेच्छप्रसिद्धित्वादिति प्रत्युदाहरणसंगतिः । **चोदितं तु प्रतीयेताविरोधात्प्रमाणेन** ॥ तुः शङ्कानिवृत्तौ । चोदितं म्लेच्छप्रसिद्धिविषयीकृतं प्रतीयेत शब्दार्थतया स्वीक्रियेत, आर्यप्रसिद्धिरूपशक्तिग्राहकप्रमाणस्याभावेन तेन विरोधस्याप्रसक्तेरिति सूत्रार्थः । तत्कल्पना, शक्तिकल्पना । विप्लुतिदर्शनात्, वैपरीत्यदर्शनात् । अविस्रम्भणीयता, अविश्वसनीयता । तत्प्रसिद्धित्वेन, निगमादिप्रसिद्धित्वेन । (कल्प्यत्वेनेति ।) पठ्यमाननिगमादिषु तत्प्र-

सिद्धेरदर्शनादिति भावः। अत एव, आचमनाधिकरणे व्यवस्थाकथनादेव ॥ ७ ॥

यथा म्लेच्छप्रसिद्धेरार्यप्रसिद्ध्या तुल्यत्वाच्छक्तिग्राहकत्वं तथा स्मृतीनां वेदवन्नित्यब्रह्मयज्ञविधिविषयत्वाद्वेदतुल्यत्वं स्यादिति दृष्टान्तसंगतिः। **प्रयोगशास्त्रमिति चेत्** ॥ नित्यब्रह्मयज्ञप्रयोगे वेदस्येव यतः स्मृतीनामपि शासकं वचनं दृश्यते ततो वेदतुल्यत्वमिति चेदिति पूर्वपक्षसूत्रार्थः। **सर्वत्र च प्रयोगात्संनिधानशास्त्राच्च** ॥ सर्वदेशेषु 'मनुरेतत्स्मृतिकर्ता' 'याज्ञवल्क्य एतत्स्मृतिकर्ता' इति स्मृतिकर्तॄणां प्रयोगात् व्यवहारात् संनिधानस्य बुद्धिसंनिहितस्य वेदार्थस्य स्मृतिकर्तृभिः लोकोपकारार्थे स्मृतिरूपेण शासनाच्च न स्मृतीनां कर्तृस्मरणशून्यवेदसमानयोगक्षेमत्वमिति सिद्धान्तसूत्रार्थः। (नित्यब्रह्मयज्ञेति।) अत्र ब्रह्मशब्दो वेदपरः ॥ ८ ॥

स्मृतेः प्रसक्तत्वात्तद्विषयापरा चिन्ता क्रियत इति प्रसङ्गसंगतिः। **अनुमानव्यवस्थानात्तत्संयुक्तं प्रमाणं स्यात्** ॥ अनुमानस्य गौतमकृतस्मृतिग्रन्थस्य च्छन्दोगमात्राधीतत्वदर्शनेन च्छन्दोगेष्वेव व्यवस्थितत्वात् गौतमीयधर्मशास्त्रं छन्दोगमात्रसंयुक्तं स्यादिति पूर्वपक्षसूत्रार्थः। **अपि वा सर्वधर्मः स्यात्तन्न्यायत्वाद्विधानस्य** ॥ अपि वेति पक्षव्यावृत्तौ। गौतमादिस्मृत्युक्तधर्मः सर्वेषां छन्दोगानामन्येषां च स्यात्, विधानस्य, विधीयतेऽनेनेति विधानं वेदः, तस्य गौतमादिस्मृतिमूलभूतस्य, तन्न्यायत्वात्, तेषु च्छन्दोगाच्छन्दोगेषु नीयमानत्वात्, सर्वविषयत्वादिति यावत्; इति सिद्धान्तसूत्रार्थः। तेषाम्, गौतमशिष्याणाम् ॥ ९ ॥

यथा गौतमादिस्मृतिः सर्वविषया तथा गोरूपार्थावलम्बिनी शक्तिः गावीगोतागोपोतालिकादिसर्वशब्दनिष्ठा स्यादिति दृष्टान्तसंगतिः। **प्रयोगोत्पत्त्यशास्त्रत्वाच्छब्देषु न व्यवस्था स्यात्** ॥ गोगाव्यादिशब्देषु अर्थविषयकप्रयोगस्योत्पत्तौ अशास्त्रत्वात् नियमकारिणः शास्त्रस्याभावात् 'गौः' इति शब्दोऽर्थप्रत्यायकः न 'गावी' इति शब्द इति शब्देषु व्यवस्था न

स्यादिति पूर्वपक्षसूत्रार्थः। **अन्याय्यं चानेकार्थत्वम्** ॥ चो हेतौ। यस्मादेकस्यार्थस्यानेकशब्दवाच्यत्वमन्याय्यं तस्मात् 'गौः' इत्येक एव शब्दो गोवाचकः, न 'गावी' इत्यादिरिति सिद्धान्तसूत्रार्थः। (तस्मादियमिति।) अत्र तत्पदं व्याकरणपरम्। वचनासिद्धस्य रागमात्रप्राप्तस्याश्रयत्वमयुक्तमित्यत आह— रागप्राप्तस्येत्यादि। व्याकृता व्याकरणसंस्कृता वाक् उत्पद्यते प्रयुज्यते; तथा च प्रयोगस्य तेन सिद्धत्वादाश्रयत्वं संभवतीति भावः। (श्रुतिविरुद्धमिति।) 'जगत्कारणं ब्रह्म' इति वेदविरुद्धं वर्णपदवाक्याभिव्यङ्ग्यतयाङ्गीकृतस्य स्फोटस्याचेतनस्य जगत्कारणत्वजल्पनमिति भावः ॥ १० ॥

वाचकप्रसङ्गात्तद्विषयः प्रकारविशेषश्चिन्त्यत इति प्रसङ्गसंगतिः। **प्रयोगचोदनाभावादर्थैकत्वमविभागात्** ॥ लोकवेदशब्दानाम् 'सोमेन यजेत' इति यागप्रयोगचोदनायाः सद्भावात् अर्थैकत्वम्। तेषां परस्परभिन्नार्थत्वे अनवगतसंगतिकस्य वैदिकपदस्यार्थाप्रत्यायकत्वापत्त्या प्रयोगचोदना न संभवेत; तस्मात्तेषां शब्दानां ये प्रतीयमाना अर्थाः तेषामविभागादभेदात युक्ता वैदिकी चोदनेति सूत्रार्थः। तदभिज्ञस्य, व्याकरणाभिज्ञस्य ॥ ११ ॥

वाचकप्रसङ्गाद्वाच्यस्य बुद्धिस्थत्वेन तन्निरूप्यत इति प्रसङ्गसंगतिः। **प्रयोगचोदनाभावादर्थैकत्वमविभागात्** ॥ व्यक्तिर्वाच्या नाकृतिः 'व्रीहीनवहन्ति' इत्यादिचोदनाया आकृत्यर्थे असंभवात्। न च द्वयोर्वाच्यत्वम्, यतः एकस्य शब्दस्य एकार्थत्वम् अतः अर्थविभागाभावात् व्यक्तिरेव वाच्येति पूर्वपक्षसूत्रार्थः। **आकृतिस्तु क्रियार्थत्वात्** ॥ तु पूर्वपक्षव्यावृत्तौ। आकृतिर्वाच्या न व्यक्तिः, क्रियार्थत्वात्, क्रिया 'गोपदं गोत्वे शक्तम्' इति शक्तिज्ञानकल्पनारूपा क्रिया अर्थः प्रयोजनं यस्याकृतेः तत्त्वात्। व्यक्तिशक्तिपक्षे 'गौर्गोपदशक्या' 'गोपदं गवि शक्तम्' इति शक्तिज्ञानद्वयकल्पनं विनिगमनाविरहात्। न तथा जातिशक्तिपक्षे, 'गोत्वं गोपदशक्यम्' इति शक्तिज्ञानकल्पने गवेतरासमवेतत्वसमानाधिकरणनिखिलगोसमवेतत्वरूपा-

स्यन्तगुरुभूतगोत्वत्वस्य शक्यतावच्छेदकत्वापत्त्या गौरवरूपविनिगमकस्य सत्त्वात् 'गोपदं गोत्वे शक्तम्' इत्येकमेव शक्तिज्ञानकल्पनमिति जातिशक्तिपक्षे लाघवमिति सिद्धान्तसूत्रवाच्याभिप्रायः । पूर्वपक्षिशङ्कितदोषं परिहरति सूत्रकारः—**तदर्थत्वात्प्रयोगस्याविभागः** ॥ तदर्थत्वात् व्रीह्यादिशब्दस्याकृत्यर्थत्वात् अवघातक्रियारूपप्रयोगस्य व्यक्तिगतस्य अविभागः जातिव्यक्त्योरपृथक्सिद्धिरूपसंबन्धविशेषः प्रयोजक इति सूत्रार्थः । व्रीह्यादिशब्दानां जातौ शक्तिः, व्यक्तौ जात्या अविभागरूपनिरूढलक्षणेति सूत्राशयः । फलमुखत्वात्, उक्तकार्यकारणभावग्रहोत्तरकालिकत्वात् । (पाशाधिकरणन्यायेनेति ।) 'अदितिः पाशान्—' इत्यादौ बहुवचनोपात्तबहुत्वस्य एकपाशेऽन्वयासंभवात्पाशावयवान्वयः, तथा पार्ष्ठिको लिङ्गसंख्ययोः सामानाधिकरण्येनाकृत्यन्वय इति भावः ॥ १२ ॥

इति भाट्टकल्पतर्वभिधाया भाट्टदीपिकाव्याख्याया प्रथमाध्यायस्य

तृतीयः पादः ।

## चतुर्थः पादः ।

पूर्वत्र पादत्रये वाक्यप्रामाण्ये निरूपिते वाक्यघटकतयोपस्थितनामधेयपदप्रामाण्यमस्मिन्पादे निरूप्यत इत्यस्य नामधेयपादस्य पूर्वपादसंगतिः पूर्वाधिकरणे अवघातादिक्रियान्वये यथासंभवं जातिव्यक्तिभ्यामुपपादिते क्रियान्वितार्थकत्वाद्व्रीह्यादिपदस्य प्रामाण्यमुक्तं भवति; उद्भिदादिपदं तु नोभयथापि क्रियान्वयीति न प्रमाणं स्यादिति प्रत्युदाहरणसंगतिः । **उक्तं समाम्नायैदमर्थ्यं तस्मात्सर्वं तदर्थं स्यात्** ॥ समाम्नायस्य वेदस्य विधित्वार्थवादत्वादिना धर्माधर्मैदमर्थ्यपरत्वलक्षणं प्रामाण्यमुक्तम्; तस्मात् विधित्वादिप्रामाण्यावच्छेदकरूपात् सर्वम् उद्भिदादिपदमपि तदर्थं धर्मार्थं स्यादेवेति सूत्रार्थः । प्रकारासंभवात्, प्रामाण्यावच्छेदकासंभवात् । प्रकारस्य, प्रामाण्यावच्छेदकस्य ॥ १ ॥

बुद्धिस्थमुद्भिदादिपदमत्र विचार्यत इति प्रसङ्गसंगतिः । **अपि वा नामधेयं स्याद्यदुत्पत्तावपूर्वमविधायकत्वात्** ॥ अपि वेत्युत्सूत्रपूर्वपक्षन्यावृत्तौ । विधिगौरवापत्त्या अविधायकत्वात् उद्भित्पदं यागनामधेयं स्यात्, न खनित्रादिगुणद्रव्यविधायकम्, यत् यतः अपूर्वं रूढ्या द्रव्यविशेषरूपगुणप्रसिद्धिकसोमपदभिन्नम् अतोऽपि नामधेयम्; विदारणरूपक्रियासाधनवाचिन उद्भित्पदस्य न योगेनापि क्रियानामधेयत्वमिति न शङ्क्यम्, यत् यस्मात्कारणात् भिद्दधातुर्विदारण इवोत्पत्तौ वर्तितुं योग्य इति सूत्रार्थः । गुणसमर्पकत्वं गुणविधित्वमित्यादौ गुणशब्द अङ्गापरपर्यायः । (उत्पत्तिशिष्टेति ।) येन वाक्येन प्रथमं यागादिक्रियावबुध्यते तद्वाक्यावगतेत्यर्थः । (सामान्यविहितसोमेति ।) यत्किंचिदिष्टभाव्यकयागत्वावच्छिन्नोद्देशेन विहितसोमेत्यर्थः । (नित्यसोमबाध इति ।) अत्र सोमस्य नित्यत्वं कामशब्दितकामनाविषयफलोद्देशेनाविहितत्वम् । (विधिप्रकार इति ।) अत्र प्रकारशब्दः स्वरूपपरः । (साधुत्वार्थत्वमिति ।) 'न केवला प्रकृतिः प्रयोक्तव्या नापि प्रत्ययः' इति न्यायेन तिद्विभक्तिमात्रस्य विवक्षितस्य प्रयोगासंभवादिति भावः । पूर्वोक्तः, गुणविशिष्टधात्वर्थकरणकभावनाविधिः । (कौस्तुभ इति ।) "किं च विशिष्टविधिपक्षे मत्वर्थलक्षणापि प्रसज्येत सर्वकारकाणां प्रथमबोधे भावनया संबन्धे सति फलकर्मत्वस्य यागकरणत्वस्य च निरूपकापेक्षोपजायते, तस्यां चापेक्षायां फलनिरूपितकरणत्वं यागस्यैव प्रतीयते, 'यागेन साध्यः पशुः' इति समानपदश्रुत्योपनीतस्य यागस्य भावनया फलं प्रति शीघ्रमुपनयात्; अतश्च पार्ष्ठिके यागफलयोः संबन्धे प्रतीयमाने तस्यामवस्थायां करणत्वेन प्रतीयमानस्य यागस्य कर्मत्वेनाप्रतीयमानतया तस्मिञ्श्रुतस्य खनित्रादेः कारकान्तरस्यैव वा न करणत्वादिना निवेशः संभवतीति अवश्यं भिन्नार्थयोः सामानाधिकरण्यानुपपत्त्या संबन्धसामान्येनान्वयार्थं मत्वर्थकल्पनया 'उद्भिद्वता यागेन साध्यः पशुः' इति भवितव्यम् । पश्चाच्चासाधितस्य यागस्य फलकरणत्वानुपपत्त्या कर्मत्वबोधे सति खनित्रादिकारकान्तरस्य भावनासंबन्धवेलायां श्रुतेन करणत्वादिनैव विशेषण-

विधिकाले 'उद्भिदा यागं भावयेत्' इत्यन्वयो भवति" इति कौस्तुभग्रन्थः। (संस्थाप्येति।) वैमृधेष्टेर्भाव्यापेक्षायां संस्थाप्येत्यनेनान्वितपौर्णमासीमितिपदेनोपस्थापितत्वात्पौर्णिमात्रिकस्य पौर्णमास्यर्थमिति भाव्यपदकल्पनया पौर्णिमात्रिकस्यैव वैमृधेष्टिरूपगुणेनोपबद्धरूपः संबन्धः सिध्यति, उक्तत्रिकस्य पौर्णमासीति संज्ञाभावे स कथं सिध्येदिति भावः। अपूर्वे, उद्भिद्वाक्यमात्रावगते। तदापत्तिः, योगरूढत्वापत्तिः। योगरूढिस्थले, पङ्कजादौ नैयायिकादिभिर्योगरूढत्वेन स्वीकृते। (कारणताया इति।) अत्र पदार्थोपस्थितिं शाब्दबोधं च प्रतीति शेषः। तदकल्पनात्, रूढ्यकल्पनात् ॥ २ ॥

क्वचिदप्यरूढस्य कर्मनामत्वे विचारिते रूढस्य बुद्धिस्थत्वात्तस्य नामत्वं विचार्यत इति प्रसङ्गसंगतिः। **यस्मिन्गुणोपदेशः प्रधानतोऽभिसंबन्धः** ॥ यस्मिन् 'पञ्चदशान्याज्यानि' इति वाक्ये पञ्चदशपदेन पञ्चदशत्वगुणस्य उपदेशः विधानं तस्मिन्वाक्ये आज्यपदम्, प्रधानतः (सार्वविभक्तिकस्तसिल्) प्रधानकर्मणि अभिसंबन्धः आभिमुख्येन संबध्यत इति नामधेयमिति यावत् इति सूत्रार्थः। यथा नामधेयोच्चारणे पुरुषस्याभिमुख्यलक्षणः संबन्धो भवति न तथान्यस्योच्चारण इत्यभिसंबन्धशब्दो नामधेयवाचीति सूत्रकृदाशयः। इदं सूत्रं विधेयभेदे वाक्यभेदस्य गमकम्। कथमन्यथा एकस्य पञ्चदशपदस्य गुणविधित्वे अन्यस्याज्यपदस्य नामधेयत्वं वदेत्सूत्रकारः? विधेयभेदस्यादोषत्वे द्वयोरपि पञ्चदशाज्यपदयोर्विधायकत्वसंभवादिति सूत्रस्य फलीभूतं तात्पर्यम्। (परस्परसाहित्यावगतेरिति।) एकपदेन द्वयोर्विधेययोरुपात्तत्वात्साहित्यावगतिरिति भावः। (एतद्वाक्यविहितानां यागानामिति।) तदिति पदेन दध्यादि सप्तद्रव्यं परामृश्य प्राजापत्यमिति सप्तसु द्रव्येषु प्रजापतिदेवतासंबन्धाभिधानाद्देवतासंबन्धबहुत्वेन तत्कल्पितयागबहुत्वाभिप्रायं यागानामिति बहुवचनमिति भावः। (सर्वप्रकृतिभूतेति।) सर्वपशुयागप्रकृतिभूतेत्यर्थः। (धेनुर्दक्षिणेतिवदिति।) 'धेन्वा दक्षिणां भावयेत्' इति धेनुवाक्यार्थः। धेनुप्रातिपदिकस्य धेनुत्वमर्थः, स्त्रीप्रत्ययस्य स्त्रीत्वम्; तयोश्च प्रथमाविभक्तिलक्षितै-

करणत्वकारकेऽन्वयः; दक्षिणापदस्य ऋत्विगानतिरर्थः; तदुत्तरप्रथमाया लक्षणया भाव्यत्वमर्थः; भावयेदिति चाध्याहारः। ततश्च धेनुत्वस्त्रीत्वोभयविशिष्टकरणतासंबन्धिनी ऋत्विगानतिभाव्यका भावना प्रवर्तनाविषय इति तद्वाक्याच्छाब्दबोध इति भावः। स च, आज्यपदार्थः पृष्ठपदार्थश्च। पशुगतस्य, अग्नीषोमीययागकरणभूतपशुगतस्य। अव्युत्पन्नत्वात्, विशिष्टलाभनिर्वाहकपरस्परान्वयासंभवात्। (गमकसहकृतबहुवचनेनेति।) गमकाविवक्षणे कपिञ्जलाधिकरणन्यायेन 'आज्यैः' इति बहुवचनस्य त्रित्वे पर्यवसानापत्तेरिति भावः। (विकल्पविधानादिति।) रथन्तरपक्षे नौधसं बृहत्पक्षे श्यैतमिति विकल्पव्यवस्थेति भावः॥ ३॥

यथा वाक्यभेदाच्चित्रादिशब्दे गुणविधित्वनिराकरणं न तादृशो वाक्यभेदोऽग्निहोत्रादिपदानां गुणविधित्वबाधकः संभवतीति प्रत्युदाहरणसंगतिः। **तत्प्रख्यं चान्यशास्त्रम्** ॥ चो हेतौ। यस्मात् तत्प्रख्यं तस्याग्निदेवतादिगुणस्य प्रख्यापकं प्रकाशकम् अन्यशास्त्रम् अग्निहोत्रवाक्यभिन्नम् 'अग्निर्ज्योतिः—' इत्यादिमन्त्रवर्णरूपं शास्त्रमस्ति तस्मात् अग्निहोत्रपदं कर्मनामधेयमिति सूत्रार्थः। संभवत्प्राप्तिकानाम्, संभवत्प्राप्तिकार्थकानाम्। होत्रम्, हूयत इति होत्रमाज्यद्रव्यम्। तस्याः, अग्निदेवतायाः। तत्र, 'यदग्नये' इति वाक्ये। (अनेकगुणोपादानेनेति।) 'अग्निहोत्रं जुहोति' इति वाक्येन विहितहोमानुवादेन अग्निप्रजापत्याद्यनेकगुणविधाने वाक्यभेदापत्तेः अनेकगुणविशिष्टहोमान्तरविधायकत्वमावश्यकमिति भावः। एतद्वाक्यविहिते कर्मणि, 'अग्निहोत्रं जुहोति' इति वाक्यविहिते कर्मणि। 'अग्निहोत्रं जुहोति' इति वाक्यस्य होमकर्मविधायकत्वं न च यदग्नय इत्याशङ्कितृत्रभिप्रायरीत्या, न तु होमोद्देशेनाग्निगुणविधिस्वीकर्तृरीत्येत्यवगन्तव्यम्। दर्वीहोमः, किंचिन्निरूपितप्रकृतित्वविकृतित्वशून्यहोमः। दर्वीहोमे आग्नेयमन्त्रबलादेवाग्निदेवतालाभे तत्र देवतागुणविधानमयुक्तमित्यत आह— विशिष्टकर्मान्तरं वेति। अग्निदेवताविशिष्टहोमान्तरं वा अग्निहोत्रवाक्येन विधीयते, तत्पक्षेऽप्यग्निहोत्रपदस्य गुणविधित्वमक्षतमिति भावः। तेन वचनेन, अग्नि-

होत्रमिति वचनेन। तदुद्देशेन, द्रवद्रव्योद्देशेन। अविनियुक्तस्य, अङ्गत्वेनाविहितस्य। प्रकरणकल्पितवाक्येन, दर्शपूर्णमासप्रकरणकल्पितेन 'आज्येनोपांशुयाजं भावयेत्' इत्याकारकेण वचनेन। (चतुर्गृहीतं वा एतदभूत्तस्याघारमाघार्येत्यनेन वेति।) 'चतुर्गृहीतं वा एतदभूत्तस्याघारमाघार्य त्रीनितः प्राचीनान्प्रयाजान्यजति' इति वाक्यम्; तस्यायमर्थः— एतत् जौहवाज्यं यदभूत् तत् चतुर्गृहीतं प्रयाजार्थम्; तस्य चतुर्गृहीनाज्यस्य उक्ताज्यसंबन्धि यदाघारमाघरणसमर्थमेकदेशमाघार्य क्षारयित्वा, (क्षारणेन संस्कृत्येति यावत्) उत्तमप्रयाजौ वर्जयित्वा आद्यान् त्रीन्प्रयाजान्यजतीति। तत्राघरणस्य चतुर्गृहीतत्वस्य च विधाने वाक्यभेदात्प्रयाजार्थचतुर्गृहीतत्वमात्रे विध्यावश्यिकतया आघारांशेऽनुवादकतया 'आघारमाघारयति' इत्यत्र तद्विधिना भाव्यम्। तथा चाघारसंस्कृतमाज्यं चतुर्गृहीताज्यरूपमिति विशेषे पर्यवस्यति, प्रयाजे विनियुक्तमिति च पर्यवस्यतीति नाविनियुक्तसंस्कारत्वदोषापत्तिरिति भावः। अभ्युदयशिरस्कत्वस्य, प्रामादिकयत्किंचिद्वैगुण्यपरिहारकत्वस्य। (नापीति।) होममात्रविधानस्वीकारेऽपि तत्र मन्त्रवर्णाद्देवताप्राप्तौ अग्निदेवताविशिष्टहोमविध्याश्रयणं पञ्चमविधिप्रकारापत्त्या न संभवतीति भावः। तत्, देवतात्वम्। (अग्नेर्होम इति व्युत्पत्त्येति।) होत्रशब्दस्य हूयत इति होत्रमिति व्युत्पत्त्या आज्यद्रव्यपरत्वमाश्रित्य अग्नये होत्रमस्मिन्निति वा अग्नेर्होत्रमस्मिन्निति वा बहुव्रीहिर्न संभवति, व्यधिकरणचतुर्थीषष्ठीबहुव्रीहिसमासस्याननुशिष्टत्वात्। नापि अग्नौ होत्रमस्मिन्निति व्यधिकरणसप्तमीबहुव्रीहिः, लाघवेन होत्रशब्दस्य होमपरत्वमङ्गीकृत्य अग्नेर्होत्रमिति तत्पुरुषसंभवे तस्यान्याय्यत्वादिति भावः। (धातुलक्ष्य इति।) 'इन्द्र ऊर्ध्वः—' इति देवतावाचिकरणमन्त्रबलेन देवतासंबन्धिक्रियारूपत्वस्याघारधात्वर्थे स्वीकार्यतया लक्षणां विना तादृशक्रियाबोधकत्वासंभवादिति भावः। अध्वरे यज्ञे ऊर्ध्वः श्रेष्ठः इन्द्रः देवतेति मन्त्रार्थः। (द्रव्यस्य लाभादिति।) चतुर्गृहीतवाक्यगतस्य 'आघार्य' इति पदस्य सिद्धान्तरीतौ आघारयतिपदलक्षितयागस्वरूपघटकप्रक्षेपांशरूपक्षरणपरतया तत्संस्कृताज्यस्य चतुर्गृहीतस्य

प्रयाजद्रव्यतया प्रयानार्थचतुर्गृहीताज्यस्यैकदेशः आघारयागद्रव्यमिति लभ्यत इति भावः । अत एव भावव्युत्पन्नद्वितीयान्ताघारपदमप्याघारयागैकदेशस्य प्रक्षेपस्य नाम, तत्रैव तदर्थाभेदान्वयसंभवात्, त्यागांशे तदभावान्न तत्र तस्य नामत्वम् । (न विरोध इति ।) द्वितीयाविभक्तिबलेन संस्कारकर्मत्वावगमेनार्थ-कर्मत्वविरोधे इति न शङ्कनीयम्, उक्तरीत्या संस्कारकर्मत्वापत्तिगौरवेण प्रथम-विधितया अर्थकर्मत्वे सिद्धे 'सुपां सुपः' इति च्छन्दसि व्यत्ययानुशासनाद्वितीया करणत्वार्थिकेति भावः । यद्यप्यभेदसंबन्धेन क्रियाविशेषणतया अग्निहोत्राघार-पदयोः कर्मत्वमावश्यिकमिति द्वितीया युक्ता करणत्वार्थता द्वितीयाया न वक्तव्या, तथापि क्रियाविशेषणानां कर्मत्वं नपुंसकत्वं चेति पाणिनिकात्यायन-पतञ्जलिभि. सूत्रवार्त्तिकभाष्येष्वनुक्त्या क्रियाविशेषणानां कर्मत्वप्रवादो निर्मूल इति भाट्टरहस्ये खण्डदेवैरेवोक्ततया न कर्मत्वमावश्यिकम् ॥ ४ ॥

यथा अग्निहोत्रपदस्य गुणविधित्वे बाधकं न तथा श्येनपदस्य तत्त्वे बाधकम्, अतो गुणविधिः श्येनपदमिति प्रत्युदाहरणसंगतिः । **तद्व्यपदेशं च** ॥ तस्मिन्नुपमानोपमेयभावे निर्देशः व्यपदेशाख्यः यस्य श्येनपदस्य तत्तद्व्य-पदेशं श्येनपदं नामधेयम्, चकारो नामधेयमित्यस्यानुकर्षणार्थ इति सूत्रार्थः । तद्व्यपदेशमिति विशेषणमुपमानोपमेयभावो नामधेयत्वे हेतुरित्यत्र हेतुगर्भं बोध्यम् । (पूर्वोक्तेति ।) पूर्वाधिकरणे अग्निहोत्रपदस्य गुणविधित्वे मन्त्रवर्णा-द्देवतागुणप्राप्तिरूपबाधकवत्प्रकृते अन्यतः श्येनगुणप्राप्तिरूपबाधकाभावादित्यर्थः । विशिष्टकर्मान्तरम्, श्येनगुणविशिष्टकर्मान्तरम् । भ्रातृव्यम्, शत्रुम् । तद्वरम्, तस्माद्बहुपदलक्षणात. वरं श्रेष्ठम् । (भूयोनुग्रहस्येति ।) उपक्रमस्थैकपदस्य लक्ष-णाया केवलोपसंहारविरोधस्य हेतुत्वमनुक्त्वा भूयोनुग्रहन्यायसनाथस्य हेतुत्वो-क्त्या उपक्रमापेक्षया केवलोपसंहारस्य प्राबल्यवादो माध्वाभिमतः परास्त इति भावः । अत्रायं पूर्वपक्षः—फलाय श्येनगुणविधिपूर्वपक्षः श्येनगुणविशिष्टकर्मा-न्तरविधिपूर्वपक्षश्चासंगतः, द्व्यन्तरितप्राचीनेनोद्भिदधिकरणेन विरोधात् । तत्र हि लघुविधिप्रकारसंभवे गुरुविधिकल्पनस्यान्याय्यत्वान्नामत्वं समर्थितम् । श्येनवा-

द्वयस्यापि लाघवाच्छ्येननामकयागविधिपरत्वसंभवे उक्तपूर्वपक्षद्वयस्यापि गुरुविधिप्रसङ्गेन कर्तुमयुक्तत्वात् । अत एवोद्भिदधिकरणन्यायेनैव श्येनपदस्य नामत्वसिद्धौ श्येनाधिकरणवैयर्थ्यं च स्यादिति । अत्रायं सिद्धान्तः—अर्थविशेषे रूढं श्येनपदं नोद्भिदधिकरणन्यायविषयः, तन्न्यायस्य यौगिकशब्दमात्रविषयत्वात् । नापि चित्राधिकरणन्यायविषयः, वाक्यभेदाप्रसक्तेः । नापि तत्प्रख्यन्यायविषयः, श्येनगुणस्यान्यतः प्राप्त्यभावादिति । इदं तु बोध्यम्—यद्यप्युपमानोपमेयभावानुपपत्तिर्गुणविधिपूर्वपक्ष एव संभवति न विशिष्टविधिपूर्वपक्षे, तथापि विशिष्टविधिपूर्वपक्षस्य भेदकप्रमाणाभाव एव निरासकहेतुर्द्रष्टव्यः । उक्तं हि कौस्तुभे—विशिष्टकर्मान्तरविधिस्तावद्भेदकप्रमाणाभावादेवायुक्तः; गुणफलसंबन्धविधिस्तु उपमानासंभवादेव निराकर्तव्य इति ॥ ९ ॥

यच्छ्येनादिशब्दस्य गुणविधित्वं निराकृत्य नामत्वं समर्थितं तन्न युक्तमित्याक्षेपादाक्षेपिकी संगतिः । **नामधेये गुणश्रुतेः स्याद्विधानमिति चेत्** ॥ नामधेये नामधेयत्वेन सिद्धान्त्यभिमते श्येनादिपदे गुणस्य यागनिरूपितकरणत्वस्य तृतीयाश्रवणाद्विधानं स्यात् यागोद्देशेन श्येनगुणविधानं स्यादिति चेदिति पूर्वपक्षसूत्रार्थः । **तुल्यत्वात्क्रिययोर्न** ॥ न गुणविधानं स्यात्; कुतः? क्रिययोः धात्वर्थाख्यातार्थक्रिययोः तुल्यत्वात् श्येनगुणधात्वर्थक्रिययोर्यथा करणभाव्यभावः तथा धात्वर्थभावनयोः क्रिययोः करणभाव्यभावस्य 'यजेत यागेन कुर्यात् यागेन भावयेत्' इत्यादिविवरणेन प्रतीयमानत्वादिति सिद्धान्तसूत्रार्थः । श्येनवाक्ये यागे श्येनगुणनिष्ठकरणतानिरूपितोद्देश्यत्वमभिचारफलनिष्ठोद्देश्यतानिरूपितोपादेयत्वमिति एकत्र धर्मिणि विरुद्धोपादेयत्वोद्देश्यत्वद्वयापत्तिरिति तात्पर्यार्थः । एतत्सूत्रे धात्वर्थाख्यातार्थयोर्द्वयोः क्रियात्वनिर्देशेन 'लः कर्मणि—' इति सूत्रेण कर्ता आख्यातार्थ इति वैयाकरणमतं निराकृतम् । न च विनिगमनाविरहः, 'यजते यागं करोति' इत्याख्यातस्य कृञ्धातुना विवरणस्यैव विनिगमकत्वादित्यवगन्तव्यम् । (भवेन्मत्वर्थलक्षणेति । ) प्राचीनरीत्येति शेषः । (उभयविशिष्टभावनाविधानं चेति ।) एतन्नवीनमतरीत्या । (क्रियारूपत्वाङ्गीकारादिति ।) क्रिया-

निर्वर्तकत्वघटितं कारकत्वं क्रियायां न संभवतीति भावः । (क्रियात्वेऽपीति ।) अपिशब्दः क्रियायाः कर्मत्वकरणत्वाख्यकारकत्वरूपेण अन्यस्मिन्प्रकारत्वद्योतकः । मूले, शाबरभाष्ये । (गुणसूत्रानुरोधेनेति ।) 'नामधेये गुणश्रुतेः स्याद्विधानम्—' इति गुणपदघटितसूत्रानुसारेणेत्यर्थः । वाजपेयशब्दस्य वाजं पेयमस्मिन्निति व्युत्पत्त्या कर्मपरत्वात्कर्मनामधेयरूपत्वम्; न तु श्येनशब्दस्य, तस्य द्रव्यरूढत्वेन योगेन कर्मपरत्वासंभवात्, तस्मिन्नामधेयरूपे वाजपेयशब्दे गुणस्य पानयोग्यवाजशब्दितयवागूद्रव्यरूपगुणस्य श्रवणात् गुणविधिर्वाजपेयपदमिति सूत्रानुसार्यर्थः शाबरभाष्याभिमत इत्यवगन्तव्यम् । (उपादेयत्वनिरुक्त्यादिकं कौस्तुभे द्रष्टव्यमिति ।) प्रकृतविधिप्रयुक्तिविषयत्वमुपादेयत्वम् । विधिप्रयुक्तिर्विधिप्रयोज्यभावनातदधीनव्यापारान्यतररूपा । उद्देश्यत्वं च कृतिसमवायघटितसंबन्धेन प्रकृतभावनान्वयित्वे सति प्रकृतविधिप्रयुक्त्यविषयत्वम् । कर्तृतदेकत्वादावतिव्याप्तिवारणाय सत्यन्तम्, कर्त्रादेः कृतिसमवायघटितसंबन्धेन भावनान्वयित्वात् । विधेयेऽतिव्याप्तिवारणाय द्वितीयदलम् । 'व्रीहिभिर्यजेत' इति विधिप्रयुक्तिविषयत्वाद्व्रीहीणाम् 'व्रीहीन्प्रोक्षति' इत्यत्राप्युद्देश्यत्वानुपपत्तिः, अतः प्रकृतविधीति । विधेयत्वं चाज्ञातज्ञापनविषयत्वम् । अनुवाद्यत्वं तु ज्ञातज्ञापनविषयत्वम् । गुणत्वं जनकत्वम् । प्रधानत्वं जन्यत्वम् । तत्रोद्देश्यत्वमुपादेयत्वं च परस्परविरुद्धम्, अनुवाद्यत्वं विधेयत्वं च परस्परविरुद्धम्, गुणत्वं प्रधानत्वं च परस्परविरुद्धमिति विवेकः । विस्तरस्तु कौस्तुभे द्रष्टव्यः ॥ ६ ॥

पूर्वाधिकरणसिद्धान्तसमर्थितनामधेयत्वापवादेन गुणविधित्वस्यैतदधिकरणसिद्धान्तविषयतया आपवादिकी संगतिः । **तद्गुणास्तु विधीयेरन्नविभागाद्विधानार्थे न चेदन्येन शिष्टाः स्युः** ॥ 'यदाग्नेयः—' इत्यष्टाकपालशब्दस्य नामधेयत्वमेवेत्युत्सूत्रपूर्वपक्षनिराकरणार्थस्तुः । तद्गुणाः तस्य कर्मणो गुणा अष्टाकपालाग्निदेवतादयः विधीयेरन्, न तु केवलकर्ममात्रं गुणमात्रं वा अप्राप्तत्वाविशेषात् । तर्हि विधेयभेदाद्वाक्यभेद इत्यत आह—विधानार्थे अविभागात्, विधीयत इति विधानं तस्मिन्भेदाभावात्, अनेकगुणविशिष्टस्यै-

कस्य कर्मणो विधानादिति यावत् । न चेत् नामत्वमेव न गुणविधित्वमिति चेत्, अन्येन वाक्यान्तरेण अष्टाकपालादयः शिष्टाः स्युः बोधिताः स्यु, अग्निदेवताया मन्त्रवर्णशिष्टत्वादेवाग्निहोत्रपदस्य नामत्वं दृष्टमिति सूत्रार्थः । वाचनिकविनियोगः, 'इन्द्र ऊर्ध्वोऽध्वर आघारमाघारयति' इति वचनाधीनो विनियोगः । 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति' इति वाक्यस्यायमर्थः— अस्मिन्वाक्ये द्रव्यदेवतासंबन्धावगमाद्यागस्यावश्यिकतया यागो भूधातुना लक्ष्यते । आख्यातस्य लेट्त्वेन विधिः आख्यातत्वेन कृतिश्चार्थः । आग्नेयादिपदोत्तरप्रथमायाः 'सुपां सुप' ' इति रीत्या करणत्वमर्थः । अग्निदेवतायास्तद्धितोपात्तद्रव्यस्य च प्रथमं भावनायामन्वयः । सप्तम्याश्चाधिकरणत्वमर्थः । अच्युत इत्याग्नेयपुरोडाशस्य विशेषणम् । तस्याच्युतत्वं च दर्शपूर्णमासघटकषड्यागमध्ये आग्नेयपुरोडाशव्यतिरिक्तस्य कस्यापि दर्शपूर्णमासकालद्वयसंबन्धित्वं नास्ति, आग्नेयपुरोडाशस्य तु उक्तकालद्वयसंबन्धित्वेन तत्र च्युत्यभावादवगन्तव्यम् । अग्निकरणत्वसंबन्धिनी पुरोडाशकरणत्वसंबन्धिनी अच्युतत्वसंबन्धिनी पौर्णमास्याद्यधिकरणत्वसंबन्धिनी यत्किंचिदिष्टभाव्यका यागकृतिर्विधिविषय इति शाब्दबोधः । पार्ष्ठिकबोधस्तु स्वयमेवोहनीयः । यद्यप्यस्मिन्वाक्येऽपूर्वार्थके ज्ञातार्थानुवादकं यत्पदमस्ति तदनन्वितमिव प्रतिभाति, तथापि 'आग्नेयेन यागं भावयेत्' इति विशेषणविधिकल्पनावेलायां प्राथमिकबोधविषयस्य कर्मण उद्देश्यतया मानेन यदिति पदं तादृशकर्मरूपोद्देश्यानुवादकमित्यवगन्तव्यम् ॥ ७ ॥

गुणविधिरूपे आग्नेयशब्दे विचारिते बर्हिराज्यादिगुणविधिशब्दः प्रसङ्गाद्विचार्यत इति प्रसङ्गसंगतिः । **बर्हिराज्ययोरसंस्कारे शब्दलाभादतच्छब्दः** ॥ शब्द्यत इति शब्दः बर्हिष्ट्वाज्यत्वाकृतिः, तस्य बर्हिरादिशब्दवाच्यबर्हिष्ट्वादेः बर्हिराज्यसंबन्धिन असंस्कारे संस्कारशून्ये बर्हिषि आज्ये च लाभात् वर्तनसंभवात् बर्हिरादिशब्दः अतच्छब्दः संस्कारवाचकशब्दभिन्न इति सूत्रार्थः । अव्यभिचारात्, बर्हिरादिशब्दप्रयोगस्य बर्हिष्ट्वजातिशून्या-

वृत्तित्वात् । लाघवाच्च, संस्कारस्य प्रतिव्यक्ति भिन्नत्वेन बर्हिष्ट्वजातेरेकत्वेन जातिवाचित्वे लाघवात् ॥ ८ ॥

रूढशब्दे विचारिते प्रसङ्गाद्यौगिकशब्दो विचार्यत इति प्रसङ्गसंगतिः । **प्रोक्षणीष्वर्थसंयोगात्** ॥ 'प्रोक्षणीरासादय' इति विषयवाक्ये प्रोक्षणीशब्दस्य बहुवचनान्ततया सूत्रेऽपि तथा निर्देशः । प्रोक्षणीशब्दे केवलयौगिकत्वमेव स्वीकर्तव्यम्, अर्थेन प्रकृष्टोक्षणसाधनत्वरूपेण यौगिकार्थेन संयोगात् सम्यक्प्रयोगरूपसंबन्धात् इति सूत्रार्थः । सम्यक्त्वं च प्रयोगस्य योगशक्यतावच्छेदकसमनियतत्वम् । प्रयोगसमनियतयोगशक्यतावच्छेदककत्वं केवलयौगिकत्वे प्रयोजकमिति यावत् । न च रूढेः प्राबल्यशङ्का, रूढेरप्राप्यसिद्धत्वात्; सिद्धौ योगरूढ्यो रूढेर्योगात्प्राबल्यमिति सूत्रस्य तात्पर्यार्थः । स्वरूपयोग्यत्वस्य, उक्षणसाधनतावच्छेदकशक्तिमत्त्वस्य । (अनुशासनबलेनेति ।) 'ऋभूणां त्वा देवानां व्रतपते व्रतेनादधामीति रथकारस्यादध्यात्' इत्यनुशासनाविनियुक्तमन्त्रबलेन रथकारशब्दस्य ऋभुत्वजात्यवच्छिन्नापरपर्यायसौधन्वनपरत्वावगतेरिति भावः । (अव्यावर्तकत्वेनेति ।) रथकरणयोग्यत्वस्य ब्राह्मणक्षत्रियादिसाधारणत्वात् तेन योग्यत्वेन 'वसन्ते ब्राह्मणोऽग्नीनादधाति' इत्याद्यवगतब्राह्मणादिव्यावर्तनासंभवात् 'वर्षासु रथकारः' इत्येतद्वाक्यगतरथकारपदस्याव्यावर्तकत्वम्, जातिवाचकत्वे तु व्यावर्तकत्वं संभवतीति भावः । प्रमाणाभावात्, वैदिकमन्त्रवर्णरूपरूढिग्राहकप्रमाणस्य यास्कादिमुनिकृतनिघण्ट्वादिप्रमाणस्य वाभावात् ॥ ९ ॥

पूर्वपक्षसिद्धान्तहेत्वोस्तुल्यत्वादातिदेशिकी संगतिः । **तथा निर्मन्थ्ये** ॥ 'निर्मन्थ्येनेष्टकाः पचन्ति' इत्यत्र निर्मन्थ्यशब्दे तथा पूर्ववत् यौगिकत्वमिति सूत्रार्थः । (मथनकर्मत्वस्येति ।) मथनकर्मीभूतो मथनजन्यो योऽल्पाग्निः तज्जन्यमहाग्नेरेवेष्टकापाकसाधनत्वेन साक्षान्मथनकर्मीभूतेऽग्नौ तदभाव इति भावः । प्रयोज्यत्वस्य, साक्षाज्जन्यतज्जन्यान्यतरत्वस्य । तस्यापि, मथनस्यापि ॥ १० ॥

प्रासङ्गिके विचारिते यदधिकरणेन प्रासङ्गिकविचारः प्रवृत्तः तेनैव प्रासङ्गिकाधिकरणोत्तराधिकरणस्य संगतेर्वक्तव्यत्वेन आग्नेयशब्दस्य देवता-तद्धितान्तत्वाद्गुणविधित्ववद्वैश्वदेवशब्दस्यापि गुणविधित्वं स्याद्देवतातद्धितान्तत्वा-दिति दृष्टान्तसंगतिः । **वैश्वदेवे विकल्प इति चेत्** ॥ वैश्वदेवशब्दे तद्धितेन देवताविधानावश्यिकत्वादग्न्यादिदेवताभिः सह विश्वेदेवदेवताया यागा-ष्टके विकल्प इति चेदिति पूर्वपक्षसूत्रार्थः । **न प्रकरणात्प्रत्यक्षविधा-नाच्च न हि प्रकरणं द्रव्यस्य** ॥ न वैश्वदेवशब्दे देवतागुणविधानं स्वस्ववाक्योक्तदेवतान्तरावरुद्धयागानामेव प्रकरणात् प्रकृतत्वात्, आमिक्षा-यागे वैश्वदेवीति प्रत्यक्षविधिनैव विश्वेदेवदेवतायाः प्राप्तत्वाच्च । विश्वे देवा अस्येति विग्रहे अस्येति सर्वनाम्ना प्रकृतद्रव्यग्रहणस्यावश्यिकतया अगत्या तत्र विकल्प इत्यत आह—न हि प्रकरणं द्रव्यस्येति । हि यस्माद्द्रव्यस्य न प्रकरणं तस्मात्तद्धितवृत्त्यन्तर्गतसर्वनाम न द्रव्यपरामर्शि, अपि तु यागस्यै-वेति सिद्धान्तसूत्रार्थः । (प्रवृत्तिनिमित्तं चेति । ) वैश्वदेवशब्दस्येति शेषः ॥११॥

पूर्वाधिकरणोक्तोत्पत्तिशिष्टबलीयस्त्वन्यायस्यात्राभावेन हेतुना द्वितीय-तृतीयपूर्वपक्षोत्थानात्प्रत्युदाहरणसंगतिः । **पूर्ववन्तोऽविधानार्थास्त-त्सामर्थ्यं समाम्नाये** ॥ ये पूर्ववन्तः प्रमाणान्तरेण संभवत्प्राप्तिकास्ते अविधानार्थाः विध्यनर्हा भवेयुः, अस्मिन्नष्टाकपालादिरूपे समाम्नाये तु विधि-सामर्थ्यमस्ति, अतोऽष्टाकपालादयो गुणविधय इति पूर्वपक्षसूत्रार्थः । **गुणस्य तु विधानार्थेऽतद्गुणाः प्रयोगे स्युरनर्थका न हि तं प्रत्यर्थ-वत्तास्ति** ॥ तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः । अष्टाकपालादिशब्देषु गुणस्य विधानरूपार्थेऽभ्युपगम्यमाने सति, प्रयोगे प्रयुज्यमाने 'वैश्वानरं द्वादशकपा-लम्' इति वाक्येनोच्यमाने यागे इति यावत् । तद्गुणाः अष्टाकपालादयः अनर्थकाः, हि यस्मात् तं प्रति वैश्वानरयागं प्रति अर्थवत्ता प्रयोजनवत्ता नास्ति उत्पत्तिशिष्टद्वादशकपालावरुद्धत्वात्तद्यागस्येति सिद्धान्तसूत्रार्थः । परि-च्छेदकत्वेन, व्यावर्तकत्वरूपविशेषणत्वेन ॥ १२ ॥

गौणीवृत्तिप्रसङ्गाद्गौणीवृत्तिनिमित्तानि निरूप्यन्त इति प्रसङ्गसंगतिः ।

**तत्सिद्धिजातिसारूप्यप्रशंसाभूमलिङ्गसमवाया इति गुणाश्रयाः** ॥ तत्सिद्धिः तत्कार्यकारित्वम्, जातिः जननम्, सारूप्यं समानरूपत्वम्, प्रशंसा प्राशस्त्यम्, भूमा बाहुल्यम्, लिङ्गसमवायः अल्पत्वम् इत्येते गुणाश्रयाः गुणस्य गौणीवृत्तेः आश्रयाः घटकतया निमित्तभूता इति सूत्रार्थः । गुणयोगनिमित्तत्वम्, गुणयोगो निमित्तं यस्य पदस्य तत्त्वम् । ननु क्रूरत्वादीनां गौणीवृत्तिघटकतया शक्तिवृत्तिघटकस्येव शाब्दबोधे भानं न स्यादत आह— गौणी कार्यतावच्छेदकमित्यादि प्रसङ्ग इत्यन्तम् । अग्रिमसूत्रे, एतत्सूत्रोपरिभागे, सूत्रस्यैकत्वेन तत्सिद्धिसूत्रापेक्षया जातिरित्यादिसूत्राणां भेदाभावात् ॥ १३ ॥

एकमुखप्रभवत्वात्, 'ब्राह्मणोऽस्य मुखमासीत्....मुखादिन्द्रश्चाग्निश्च' इति श्रुत्यवगमितैकमुखप्रसूतत्वात् ॥ १४ ॥

प्रकारत्वात्, शाब्दबोधे प्रकारत्वात् ॥ १५ ॥

पर्युदासस्य, यागसाधनद्रव्यभिन्नत्वस्य । (गवाश्वगतप्राशस्त्याभावेति ।) गवाश्वगतं यत्प्राशस्त्यं तदभावेत्यर्थः ॥ १६ ॥

चयनाङ्गत्वानुपपत्त्या, चयनाधारस्थण्डिलनिष्पादकत्वरूपचयनाङ्गत्वानुपपत्त्या । अन्यथा, एतद्विध्यभावे । आर्थिकत्वाच्च, उक्ताङ्गत्वान्यथानुपपत्तिलब्धत्वाच्च । (चयनभिन्नकर्तृकत्वमपीति ।) प्राप्नुयादिति शेषः । (लिङ्गप्रकरणप्राप्तेति ।) उपधाने उपधानप्रकाशकलिङ्गे उपधानप्रकरणाभ्यामङ्गतया प्राप्तेत्यर्थः । (मन्त्रमात्रस्येति ।) सृष्टिपदघटितमन्त्रमात्रस्येत्यर्थः । (सृष्टिबाहुल्यं गुणो गौणीवृत्तिनिमित्तमिति ।) स्वशक्यसृष्टिवाचिपदघटितमन्त्रगतबहुत्वसमानाधिकरणसमुदायाश्रयत्वरूपगौणीवृत्तौ बहुत्वरूपबाहुल्यं घटकतया गुण इत्यर्थः । भाष्यकारमते उक्तमन्त्रोपधेयेष्टकोद्देशेनोपधानविधिः । वार्त्तिककारमते मन्त्रविशिष्टमुपधानमिष्टकोद्देशेन विधीयते । सृष्टिपदोत्तरक्तुमतुबर्थे-

इका उद्देश्या मतुबर्थविशेषणसंबन्धप्रतियोगिभूतमन्त्रस्य पार्ष्ठिकमुपधानवैशिष्ट्यमिति विवेकः ॥ १७ ॥

अल्पत्वं निमित्तम्, प्राणभृत्पदघटितमन्त्राल्पत्वसमानाधिकरणसमुदायाश्रयत्वरूपगौणीवृत्तौ घटकतया अल्पत्वं निमित्तम् । सौत्रस्य लिङ्गसमवाय इत्यस्यायमर्थः— लिङ्गस्य च्छत्र्यच्छत्रिसमुदायज्ञापकस्य च्छत्रस्य समवायः स्वाश्रयच्छत्रिघटितोक्तसमुदायवर्तित्वरूपः संबन्ध इति ॥ १८ ॥

यथा प्राणभृत्पदस्य प्राणभृदप्राणभृत्समुदायपरत्वं तथा घृतपदस्य घृततैलादिसमुदायपरत्वं स्यादिति दृष्टान्तसंगतिः । एकपदरूपस्य नामधेयस्य प्रामाण्ये विचारिते घृतमिति पदस्याप्येकपदत्वेन तत्प्रामाण्यविचारस्य पदप्रामाण्यपादसंगतिः । **संदिग्धे तु वाक्यशेषात्** ॥ तुरुत्सूत्रपूर्वपक्षव्यावृत्त्यर्थः । उपक्रमस्थे पदे संदिग्धे सामान्यधर्मव्याप्यविशेषधर्मप्रकारकनिश्चयाविषयार्थके वाक्यशेषात् उपसंहारस्थवाक्यस्य शेषभूतात्पदात् विशेषनिर्णय इति सूत्रार्थः । संदिग्धार्थनिर्णये, विशेषधर्मप्रकारकनिश्चयाविषयार्थनिर्णये । उपलक्षणत्वे, घृततैलादिसाधारणपरत्वे ॥ १९ ॥

सामर्थ्यकल्पितद्रवद्रव्यपदस्य प्रामाण्यविचारात्पादसंगतिः । पूर्वाधिकरणवद्वाक्यशेषरूपनिर्णायकाभावात्स्रुवादिकरणकावदानेऽवदेयद्रव्यस्याव्यवस्थैवेति प्रत्युदाहरणसंगतिः । **अर्थाद्वा कल्पनैकदेशत्वात्** ॥ 'स्रुवेणावद्यति' इत्यर्थस्स्रुवगतद्रवद्रव्यावदानसाधनत्वरूपसामर्थ्यात् द्रवद्रव्यमिति द्वितीयान्तपदस्य कल्पनाकल्पितस्य पदस्य वाक्यैकदेशत्वात् वाक्यार्थविषयकशाब्दबोधजनकत्वेन प्रामाण्यमिति सूत्रार्थः । तत्स्वरूपम्, धर्माधर्मादिस्वरूपम् ॥२०॥

इति भाट्टकल्पतरुभिधायां भाट्टदीपिकाव्याख्यायां प्रथमाध्यायस्य

चतुर्थः पादः ।

## द्वितीयोऽध्यायः।

प्रमाणसिद्धं कर्मस्वरूपमुपजीव्यैव कर्मभेदस्य वक्तव्यत्वाद्भेदाध्यायस्यास्य पूर्वेण प्रमाणाध्यायेनोपजीव्योपजीवकभावः संगतिः। अस्य धात्वर्थपादस्यापूर्वभेदोपयोगिकत्वेन भेदाध्यायसंगतिः। नामधेयधात्वर्थपादयोः पदविचाररूपत्वेन सादृश्यमनयोः संगतिः। यथा स्रुगादावदानस्य कर्मपाकाङ्क्षत्वाद्द्रव्यमिति कर्मविशेषो निरूपितः तथा स्वर्गादेः कार्यस्य करणसापेक्षत्वात्करणं निरूप्यत इति दृष्टान्त संगतिः पूर्वाधिकरणेन। **भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेतैष ह्यर्थो विधीयते॥** न ह्यत्र सूत्रे भावशब्दः कर्मशब्दश्च धात्वर्थपरः। धात्वर्थपराः शब्दा धात्वर्थपरा इत्यर्थापत्तेः भिन्नार्थौ तावभ्युपगन्तव्यौ। एकशब्दनिष्ठो च भावार्थकर्मार्थशब्दो स्वीकार्यौ, भावार्थाः कर्मशब्दा इति सामानाधिकरण्यनिर्देशेन तथा प्रतीतेः। तादृशाश्च शब्दाः 'यजेत' 'ददाति' 'जुहोति' इत्याद्याः प्रकृतिप्रत्ययसमुदायरूपाः, तत्र प्रकृत्यंशेन यागादिक्रियारूपकर्मणः प्रतिपादनात्प्रत्ययांशेनाख्यातेन भावनाकृतियत्नापरनामधेयस्य भावस्य प्रतिपादनात्। भावो नामाख्यातार्थः, 'भावप्रधानमाख्यातम्' इति यास्कस्मृतेः। आख्यातार्थेषु एकत्ववर्तमानत्वकृतिरूपभावेषु मध्ये भावः प्रधानं यस्याख्यातस्य तद्भावप्रधानमिति व्युत्पत्तिः, न त्वर्वाचीनवैयाकरणरीत्या भावो धात्वर्थः प्रधानमाख्यातार्थापेक्षया विशेष्यभूतो यस्य तद्भावप्रधानमिति व्युत्पत्तिः समीचीना, तथा सति 'भावप्रधान आख्यातार्थः' इति यास्कस्मृतो निर्देशापत्तेः 'प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोस्तु प्रत्ययः प्राधान्येन' इति यास्कस्मृतिगतवचनान्तरविरोधापत्तेश्च। एतेनाख्यातार्थापेक्षया 'पचति चैत्रः' इत्यादौ अनुभवानुरोधाच्छाब्दबोधे प्रथमान्तपदार्थो मुख्यविशेष्यतया भासत इत्यर्वाचीनतार्किकमतमपास्तम्, 'सर्वं वाक्यं क्रियायां परिसमाप्यते' इत्याख्यातार्थक्रियामुख्यविशेष्यसमर्पकयास्कस्मृतिविरोधात्, न्यायपञ्चाध्याय्यां काणाददशाध्याय्यां च प्रथमान्तमुख्यविशेष्यसमर्पकसूत्रादर्शनाच्च,

ऋप्यनुभवविरुद्धस्वानुभवस्य शपथनिर्णेयत्वाच्च । तथा च भावार्थाश्च ये कर्मशब्दाः तेभ्यः शब्देभ्यः, क्रियत इति क्रिया स्वर्गादिफलं तत्साधनमपूर्वं वा हि यस्मात् स्वार्थानुष्ठानद्वारा जन्यतया प्रतीयते तस्मादेष भावार्थः विधीयत इति सूत्रार्थः । एतत्सूत्रे भावस्याख्यातार्थत्वोक्त्या कर्तुराख्यातार्थत्वमसंगतम् । 'लः कर्मणि—' इत्यादिसूत्रेऽनुवृत्तं कर्तरीति पदमपि भावार्थसूत्रानुरोधात् 'द्व्येकयोर्द्विवचनैकवचने' इतिवत् 'बहुषु बहुवचनम्' इतिवद्वा भावप्रधानतया कर्तृत्वपरमित्यलम् । एकत्वानेकत्वादिरूपेण, अभेदतदभावादिरूपेण । (फलान्वयेति ।) धात्वर्थस्येति शेषः । तदर्थत्वे, सोमार्थत्वे । (होमेन दधिनिष्ठकरणतासंपादनवदिति ।) करणताया अन्यनिरूपितत्वेन निरूप्ये निरूपकस्य दृष्टविधया हेतुत्वमिति भावः । पदश्रुत्या, फलकरणयोस्तिङन्तरूपपदघटकावयवबोध्यतया । सा, पदश्रुतिः । तस्याः, पदश्रुतेः । तदन्वयस्य, धात्वर्थकरणत्वान्वयस्य । प्रथमावगतस्य, प्रथमं भावनान्वितस्य यागकरणत्वस्य । कल्प्यस्य, लाक्षणिकस्य । (उपजीव्यत्वादिति ।) वनस्थसोमलतया फलानिष्पत्तेः क्रियाविष्टया फलनिष्पत्तिर्वाच्येति क्रियायास्तत्करणत्वस्य वा उपजीव्यत्वमिति भावः । (न प्रतिनिध्युपादानमिति ।) 'न प्रधानस्य प्रतिनिधिः' इति न्यायादिति भावः । तत्, प्रतिनिध्युपादानम् । (पचति पाकं करोतीति ।) यद्यपि पचिधातोः पाकमिति द्वितीयान्तपदेन विवरणात् 'विवरणविव्रियमाणयोरेकार्थत्वम्' इति न्यायेन पाककर्मत्वे शक्तिः स्यात् तथापि 'पाकेन करोति' 'पाके यतते' इति विवरणानुसारेण पाककरणत्वे पाकाधिकरणत्वे च पाककर्मत्व इव विनिगमनाविरहाच्छक्तिरापाद्यमाना नापह्नोतुं शक्या । त्रिषु शक्ताबभ्युपगम्यमानायाम् 'एकस्य शब्दस्यैकार्थ्यम्' इति न्यायविरोधः भावकृदन्तपाकपदेन पाकमात्रबोधानापत्तिश्च स्यात् । अतः 'पाकम्' 'पाकेन' 'पाके' इति पचधातुविवरणपदे श्रूयमाणद्वितीयादिर्धात्वर्थाख्यातार्थयोः संसर्गानुवादक इति धातोः पाककर्मत्वादिलक्षणातात्पर्यग्राहक इति वाङ्गीकर्तव्यः । यद्यप्याख्यातस्य विवरणरूपे 'करोति' इति पदे कृञ्धातुवदाख्यातमपि प्रविष्टं तथापि

स्वस्य स्वेन विवरणानुपपत्तेराख्यातपदमाख्यातस्य न विवरणम् अपि तु कृञ्धातुरेव । न च करोतीति कृञ्धात्वाख्यातसमुदायस्य विवरणत्वं युक्तम्, लाघवात्कृञ्धातुमात्रेण विवरणलाभे समुदायस्य तत्त्वानुपपत्तेः उक्तविवरणात्पूर्वमनिर्णीतार्थस्याख्यातस्याख्यातविवरणत्वानुपपत्तेश्च । अत एव करोतीति-विवरणगताख्यातस्य पाकमिति द्वितीयावन्नाश्रयत्वरूपसंबन्धानुवादित्वमुपपद्यते, अथाप्याख्याते आश्रयत्वशक्त्यसिद्धेः सिद्धौ वा विवरणवैयर्थ्यात् । तस्मात् 'न केवला प्रकृतिः प्रयोक्तव्या नापि प्रत्ययः' इति रीतिमनुसृत्य करोतीति विवरणपदे आख्यातनिर्देशः न प्रयोजनान्तरकृत इति भावः । (करोतिपर्यायत्वादेकर्मकत्वमिति ।) यद्यपि 'पाके यतते' इति विवरणाद्यततिपर्यायत्वमाश्रित्याकर्मकत्वमप्याख्यातस्येति वक्तुं शक्यं तथापि 'पचति पाकं करोति' इति विवरणबाहुल्यवत् 'पाके यतते' इति विवरणस्य बाहुल्याभावात्करोतिपर्यायत्वमेवेति भावः । (अर्थभावनात्वमिति ।) अर्थं प्रयोजनं भावयत्युत्पादयतीत्यर्थभावना, तस्या भावस्तत्त्वमित्यर्थः । (कारकतासंबन्धेन तद्धितसमासादिवृत्तिर्यथाग्नेयमित्यादाविति ।) कारकतासंबन्धेन देवतात्वरूपसंप्रदानकारकत्वात्मकसंबन्धेन कारकत्वस्य संबन्धत्वकीर्तनं वस्तुस्थित्या न तु संबन्धत्वेन भानप्रयुक्तम्, आग्नेयमित्यत्र तद्धितोक्तदेवतात्वस्य तत्त्वेनाभानात् । प्रतिपादकत्वं तृतीयार्थः । तस्य च तद्धितवृत्तिरित्यत्र तद्धितेऽन्वयः । वृत्तिरित्यस्य व्यस्तत्वरहितपदसमूह इत्यर्थः । तथा च कारकत्वप्रतिपादकतद्धितघटितवृत्तिरिति वृत्तिरित्यन्तस्यार्थः । (अग्नेर्देवतात्वाद्भावनायामेवान्वय इति ।) देवतात्वद्वारा भावनायामन्वय इत्यर्थः । न तु, द्रव्यान्वयस्तु । सा, वृत्तिः । समानाभिधानश्रुत्या, तिङन्तघटकैकावयवबोध्यतया । अत एव, लिङ्गानन्वयिभावनान्वयकथनादेव ॥ १ ॥

यदुक्तं धात्वर्थस्यापूर्वभेदोपयोगित्वं तन्न संभवति अपूर्व एव प्रमाणाभावादित्याक्षेपिकी संगतिः। **चोदना पुनरारम्भः ॥** आरभ्यत इत्यारम्भः अपूर्वम् । पुनःशब्दोऽन्तरालवाची । यागफलयोरन्तरालेऽपूर्वं यागजन्यमस्तीत्यभ्युपगन्त-

ध्यम्, यतः 'स्वर्गकामो यजेत' इत्यत्यन्तव्यवहितकालयोर्यागस्वर्गयोः साध्य-साधनभावसमर्पिका चोदनास्तीति सूत्रार्थः । लक्षणापत्तेः, फलोत्पत्तिसाधनता-शून्यत्वार्थे लक्षणापत्तेः । यद्यपि ध्वंसे फलोत्पत्तियोग्यताविशिष्टरूपेण विनाश्य-त्वं चास्ति तथापि विनाशत्वेन विनाशवाचिनः क्षरत्यादेरुक्तविशिष्टविनाशत्वेन तद्बोधकत्वं लक्षणां विना न भवतीति तात्पर्यम् । (फलमुखत्वेनेति ।) 'यजेत स्वर्गकामः' इति वाक्यात्प्रथमं शाब्दबोधो निर्विचिकित्सो न जायते । आशु-तरविनाशिनो यागस्य कालान्तरभाविफलजनकत्वमनुपपन्नमित्ययोग्यताज्ञानरूप-प्रतिबन्धकसद्भावेन योग्यताज्ञानरूपकारणाभावादपौरुषेयस्य वेदस्याप्रामाण्यं स्यात् । तस्मादपूर्वमित्यपूर्वं व्यापारं कल्पयित्वा योग्यताज्ञानं संपाद्य तत्सहकृता-द्वाक्यान्निर्विचिकित्सं शाब्दज्ञानं फलं जायते । तन्मुखत्वेन, तदनन्तरं जाय-मानत्वेनेति भावः । (तदवान्तरव्यापार इति ।) अत्र तत्पदमपूर्वपरम् । संनि-पत्योपकारकाङ्गजन्यापूर्वाणाम्, द्रव्यदेवतान्यतरगतातिशयजनकाङ्गजन्यद्रव्यदेव-तागतातिशयानाम् । (आरादुपकारकेति ।) आत्मनिष्ठापूर्वजनकेत्यर्थः । इदं तु बोध्यम्—समवायसंबन्धेन परमापूर्वं प्रति समवायसंबन्धेनोत्पत्त्यपूर्वं कार-णम् । समवायसंबन्धेन स्वर्गसुखं प्रति समवायसंबन्धेन परमापूर्वं कारणम् । एवं समुदायापूर्वं प्रत्युत्पत्त्यपूर्वं कारणम् । परमापूर्वगतफलजननानुकूलयोग्यतां प्रति आरादुपकारकाङ्गजन्यापूर्वं समवायघटितसामानाधिकरण्यसंबन्धेन कारणम् । आत्मसमवायिनि यागादौ स्वरूपसंबन्धेनोत्पत्त्यपूर्वजननानुकूलयोग्यतां प्रति स्वाश्रयद्रव्यदेवतान्यतरजन्यत्वसंबन्धेन संनिपत्योपकारकाङ्गजन्यापूर्वं कारणम् । स्वजन्यभोगसमवायित्वसंबन्धेन आत्मन्युत्पन्नपश्वादिकं प्रति समवायसंबन्धेन परमापूर्वं कारणम् । स्वाश्रयपितृकत्वसंबन्धेन पितृतृप्तिरूपफलं प्रति समवाय-संबन्धेन पितृश्राद्धादिजन्यपरमापूर्वं कारणम् । स्वाश्रयपुत्रकत्वसंबन्धेन पूतत्वं प्रति जातेष्टिजन्यपरमापूर्वं समवायसंबन्धेन कारणमिति ॥ २ ॥

धात्वर्थादपूर्वमिति स्थिते 'व्रीहीनवहन्ति' इत्यत्रावघातस्याप्यदृष्टार्थ-त्वापत्तिर्धात्वर्थत्वादिति दृष्टान्तः संगतिः । **तानि द्वैधं गुणप्रधान-**

**भूतानि ॥** तानि भावार्थानि कर्मार्थानि तिङन्तपदानि गुणभूतानि प्रधानभूतानि चेति द्वैविध्यं गतानीति सूत्रार्थः । **यैस्तु द्रव्यं न चिकीर्ष्यते तानि प्रधानभूतानि द्रव्यस्य गुणभूतत्वात् ॥** तुः संभाव्यमानाशङ्कानिवृत्त्यर्थः । यैः 'सोमेन यजेत' इत्यादिभिस्तिङर्थैः द्रव्यं सोमादिकं संस्कर्तुं न चिकीर्ष्यते तानि तिङन्तपदानि प्रधानभूतानि आत्मनिष्ठादृष्टजनकत्वेन द्रव्यगतादृष्टाजनकत्वाद्द्रव्यापेक्षया प्रधानभूतानि द्रव्यस्य सोमादेः यागापेक्षया गुणभूतत्वादिति सूत्रार्थः । **यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयेत तस्य द्रव्यप्रधानत्वात् ॥** तुः पूर्ववत् । यैः 'व्रीहीनवहन्ति' इत्यादिगतैरवघातादिभिः द्रव्यं व्रीह्यादि चिकीर्ष्यते वैतुष्यादिविशिष्टत्वेन कर्तुमिष्यते तत्र तेषु गुणः द्रव्यापेक्षया गुणभावः प्रतीयेत तस्य द्रव्यस्य संस्कार्यस्य द्रव्यस्य प्रधानत्वात् क्रियाजन्यातिशयाश्रयत्वेन क्रियापेक्षया प्रधानत्वादिति सूत्रार्थः । अत एव, नियमस्यावघाताश्रितत्वादेव । तस्य, अवघाताश्रितनियमस्य । जन्यत्वमात्रम्, अवघातजन्यत्वमात्रम् । तत्कल्पनात्, प्रयोजकत्वकल्पनात् । अतः, वैतुष्यस्य प्रयोजकत्वात् । तल्लोपः, अवघातलोपः । आर्थिकविध्यन्तरकल्पनात्, 'अवघातेनादृष्टं संपादयेत्' इत्याकारकवाक्यकल्पनात् । जन्यद्वयोक्तेः, वैतुष्यादृष्टरूपफलद्वयोक्तेः । द्वितीयादिधर्मिग्राहकप्रमाणेन, द्वितीयादिविभक्तिरूपं यददृष्टरूपधर्मिग्राहकप्रमाणं तेन । धर्मित्वं चादृष्टस्य व्रीह्यादिस्थत्वापेक्षया बोध्यम् । तत्त्वेनैव, व्रीहित्वेनैव ॥ ३ ॥

प्रोक्षणादेः संस्कारकर्मत्वे अवघातवद्दृष्टं प्रयोजनं वक्तव्यम्; तदभावात्प्रधानकर्मत्वमेवेति प्रत्युदाहरणसंगतिः । **धर्ममात्रे तु कर्म स्यादनिर्वृत्तेः प्रयाजवत् ॥** धर्ममात्रे दृष्टोपकारजनके प्रोक्षणादौ प्रयाजवत् प्रधानकर्मेति व्यवहारः स्यात् द्रव्यनिष्ठोपकारस्य प्रोक्षणादिना अनिर्वृत्तेः अनिष्पत्तेरिति पूर्वपक्षसूत्रार्थः । **तुल्यत्वात्क्रियतरैः सधर्मः स्यात् ॥** 'व्रीहीन्' इति द्वितीयाश्रुतेर्गुणकर्मत्वप्रयोजिकायाः 'व्रीहीनवहन्ति' 'व्रीहीन्प्रोक्षति' इत्यनयोस्तुल्यत्वात् इतरैः अवघातादिभिः सधर्मः सदृशः प्रोक्षणादिः स्यात् इति

सिद्धान्तसूत्रार्थः । ('कर्मणि द्वितीया' इत्यनुशासनादिति ।) क्रियत इति कर्मेति व्युत्पत्त्या जन्यार्थककर्मशब्देन सप्तम्यन्तेन द्वितीयार्थस्यानुशासनात् । ('घटं करोति' इत्यादिप्रयोगाच्च साध्यत्वमेव द्वितीयार्थ इति ।) 'कर्तुरीप्सिततमं कर्म' इत्यनुशासने कर्तृपदस्वारस्येन कृत्यधीनत्वं कर्मत्वमिति पर्यवस्यति; कृत्यधीनत्वं च कृतिनिरूपितविधेयताख्यविषयतापरपर्यायमुत्पत्तिमत्त्वम्; अत एव 'घटं करोति' इत्यादौ कृतिनिरूपितविधेयताख्यविषयतायां द्वितीयायाः प्रयोगः; 'ग्रामं गच्छति' इत्यादौ सिद्धस्य ग्रामादेः स्वरूपतः कृतिनिरूपितविधेयताख्यविषयताभावेऽपि क्रियाजन्यसंयोगविशिष्टत्वेन रूपेणोक्तविषयतासत्त्वाद्द्वितीया नानुपपन्ना; तथा 'व्रीहीन्प्रोक्षति' इत्यादौ संस्कारविशिष्टत्वरूपेण व्रीहीणामुक्तविषयतारूपजन्यत्वमक्षुण्णमिति भावः । (न सूत्रद्वयवैयर्थ्यमिति ।) 'अग्नेर्माणवकं वारयति' इत्यादौ ईप्सितयोरग्निमाणवकयोः 'वारणार्थानामीप्सितः' इति सूत्रेणोक्तविषयत्वरूपकर्मत्वाभावेनापादानत्वापत्तौ माणवकस्याप्यपादानत्ववारणाय 'कर्तुरीप्सिततमम्—' इतीप्सिततमस्य माणवकस्य कर्मत्वार्थं सूत्रम्, द्वेष्योदासीनयोर्गमनादिकर्मत्वसंग्रहार्थम् 'तथायुक्तं चानीप्सितम्' इति सूत्रमिति भावः । (दृष्टद्वारासंभवेऽपि चेति ।) प्रोक्षणस्येत्यादिः । (अनीप्सितकर्मत्वेनेति ।) सक्तूनां भूतभाव्युपयोगस्य दृष्टस्याभावेन होमभावनानिरूपितविधेयताख्यविषयतारूपोत्पत्त्याश्रयोक्तविधोपकारलक्षणफलाश्रयत्वरूपकर्मत्वाभावेऽपि ईप्सिततमत्वाभावेऽपि च होमभावनायाः स्वनिरूपितविषयतारूपसंबन्धसत्त्वात्तादृशसंबन्धवत्त्वेन सक्तूनां कर्मत्वसंभवादनीप्सितकर्मत्वोपपत्तिरिति भावः । अदृष्टोपकारस्यापि, भूतभावीप्सितोपकाराख्यफलशून्यस्यापि सक्तोः । दृष्ट उपकारो यस्य स दृष्टोपकारः न दृष्टोपकारः अदृष्टोपकार इति विग्रहः । अथ वा अदृष्टरूपश्चासावुपकारश्चादृष्टोपकार इति विग्रहः । एतत्पक्षे होमभावनाया ईप्सितकर्मरूपभाव्यापेक्षायाः सत्त्वात् ईप्सितादृष्टाख्योपकारस्यापि सक्तुवत्कर्मत्वेन भावनान्वयावश्यकतया द्विकर्मकत्वापत्तिरित्यर्थः ॥ ४ ॥

यथा यागीयद्रव्यगतातिशयाधायकत्वात्प्रोक्षणस्य गुणकर्मत्वं तथा

थागीयदेवताभिधानाख्यविषयताख्पातिशयजनकत्वात्स्तोत्रशस्त्रयोर्गुणकर्मत्वं स्यादिति दृष्टान्तसंगतिः । **स्तुतशस्त्रयोस्तु संस्कारो याज्यावद्देवताभिधायित्वात्** ॥ तुः प्रधानकर्मत्वव्यावृत्त्यर्थः । स्तोत्रशस्त्रयोः याज्यामन्त्रवद्गुणकर्मत्वं देवताभिधायकत्वादिति पूर्वपक्षसूत्रार्थः । **अर्थेन त्वपकृष्येत देवतानामचोदनार्थस्य गुणभूतत्वात्** ॥ तुः पूर्वपक्षव्यावृत्त्यर्थः । स्तोत्रशस्त्रयोः शब्दरूपदेवताबोधकत्वेन संनिपत्योपकारकत्वाङ्गीकारे अर्थेन इन्द्रशब्दरूपदेवताप्रतिपादनसामर्थ्यरूपलिङ्गेन ऐन्द्री स्तुतिः महेन्द्रयागादपकृष्येत देवतानामकचोदनार्थस्य इन्द्रशब्दस्य (उक्तेन्द्रशब्दं प्रतीति यावत्) स्तोत्रशस्त्रयोर्गुणभूतत्वादिति सिद्धान्तसूत्रार्थः । (अभिधानस्यैवेति ।) अस्य भावकृदन्तत्वेन शाब्दबोधस्येत्यर्थः; अभिधीयतेऽनेनेति करणकृदन्तत्वे बोधजनकस्येत्यर्थः । प्रयाजशेषाधिकरणन्यायेन, 'प्रयाजशेषेण हवींष्यभिघारयति' इत्यत्र प्रयाजशेषकरणकाभिघारणविधावभिघारणस्य दृष्टप्रयोजनाभावेनादृष्टार्थत्वापत्त्या तृतीयायाः कर्मत्वलक्षणामङ्गीकृत्य प्रयाजशेषमभिघारणेन संस्कुर्यादिति दृष्टार्थत्वानुरोधेन लक्षणा न दोषायेति न्यायेन । लिङ्गादेव, स्तोत्रशस्त्रगतसामर्थ्यादेव । तादृक्त्वोपपत्तौ, गुणिगतगुणप्रकाशने गुणिनोऽपि प्रकाशनेन गुणिप्रकाशकत्वसिद्ध्युपपत्तौ । विधिवैयर्थ्यात्, 'आज्यैः स्तुवते' 'प्रउगं शंसति' इत्याज्यसंज्ञकस्तोत्रविधिप्रउगसंज्ञकशस्त्रविधिवैयर्थ्यात् । एवं च, स्तोत्रशस्त्रयोरदृष्टार्थत्वासिद्धौ च । निगमेषु, निगमसंज्ञकमन्त्रेषु । सामान्यसंबन्धबोधकप्रमाणाभावेन, पूषानुमन्त्रणमन्त्रस्यानुमन्त्रणसमाख्यया यागसामान्यसंबन्धबोधादुत्कर्षवत् ऐन्द्रीस्तुतेस्तादृशोत्कर्षनियामकसामान्यसंबन्धबोधकप्रमाणाभावेन । मनोतास्थाग्निशब्दवत्, 'त्वं ह्यग्ने प्रथमो मनोता' इति मन्त्रस्थाग्निशब्दवत् ॥ ९ ॥

विधायकतिङन्ते विचारिते प्रसङ्गादभिधायकतिङन्तपदं विचार्यत इति प्रसङ्गसंगतिः । **विधिमन्त्रयोरैकार्थ्यमैकशब्द्यात्** ॥ 'यस्योभयं हविरार्तिमार्च्छेत्—' 'देवांश्च याभिर्यजते' इति विधिमन्त्रयोः श्रूयमाणतिङन्त-

पदयोः 'सोमेन यजेत' इति तिङन्तपदस्य योऽर्थो विधायकत्वं तत्परत्वं स्यात् तिङन्तत्वेन रूपेण शब्दसारूप्यादिति पूर्वपक्षसूत्रार्थः । **अपि वा प्रयोगसामर्थ्यान्मन्त्रोऽभिधानवाची स्यात्** ॥ अपि वेति पूर्व-पक्षव्यावृत्तौ । प्रमाणान्तरावगतेऽर्थे उदाहृतविधिमन्त्रगतपदानां प्रयोगात् 'ददामि' 'गृह्णामि' इत्यादौ परप्रवर्तनारूपविधिशक्तिप्रतिबन्धकोत्तमपुरुषप्रयो-गात् । मन्त्रपदेनोदाहृतं मन्त्रवाक्यं ब्राह्मणवाक्यं उत्तमपुरुषघटितवाक्यगत-तिङन्तपदं विवक्षितम्, तदेतत्सर्वमभिधानवाचि अभिधीयत इत्यभिधानं धात्वर्थ आख्यातार्थकृतिश्चेत्यर्थद्वयाभिधायकं न तु प्रेरणारूपस्याज्ञातज्ञापनव्याप्यस्य विधेरभिधायकमिति सिद्धान्तसूत्रार्थः । याभिः, गोभिः । यस्य, सांनाय्य-यागस्य । उभयम्, दधि पय इत्युभयम् । इदं तु बोध्यम्— न यच्छब्दस्य विधिकुण्ठकत्वं युक्तम्, 'य एवं विद्वानग्निं चिनुते' 'योऽदाभ्यं गृहीत्वा सोमाय यजते' 'यदाग्नेय—' इत्यादौ यच्छब्दसत्त्वेऽपि विधिस्वीकारात् । न च यच्छब्दस्य तच्छब्दावधि विधिकुण्ठकत्वमित्यपि युक्तम्, 'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति' इत्यादौ यत्तच्छब्दमध्ये वैश्वानरात्मोपास्तिविधिदर्शनात् । न च यच्छब्दस्य प्रसिद्धार्थकतया स्वघटितवाक्यस्य प्रमाणान्तरसिद्धानुवादक-तया न विधित्वमिति ज्ञापयितृत्वं विधिकुण्ठकत्वमित्यपि वक्तुं शक्यम्, तर्हि प्रमाणान्तरस्यैव विधिकुण्ठकत्वपर्यवसानेन यच्छब्दस्य तत्कुण्ठकत्वासिद्धेः । तस्मादेवं वाच्यम्— यत्र क्वचन एकस्मिन्प्रकरणे एकार्थकं वाक्यद्वयं तत्र विनिगमकाभावेन कस्य विधित्वं कस्य वानुवादत्वमिति शङ्कायां यत्र यच्छब्दो वर्तते तदनुवादकमित्येतत्समर्पको यच्छब्द इति । तदपि न समीचीनम्, प्राथ-मिकवाक्यस्य विधित्वं पाश्चात्यस्यानुवादत्वमिति निर्णयसंभवात् । एवमेवकार-स्यापि न विधिकुण्ठकत्वं युक्तम्, 'अत्र ह्येवावपन्ति' 'अत एवोद्वपन्ति' इत्यादौ 'सत्यमेव वदेत्' इत्यादौ च विधिदर्शनात् । न च एवकारस्य स्वसमभि-व्याहृतार्थविधिकुण्ठकत्वं न तु स्वार्थविधिकुण्ठकत्वम् उक्तस्थलेष्वेवकारार्थस्य

विधानं न तत्समभिव्याहृतार्थस्येति शङ्क्यम्, 'तिस्र एव साह्नस्योपसदो द्वादशाहीनस्य' इत्यादौ उपसदुद्देशेनैवकारसमभिव्याहृतार्थस्य त्रित्वस्य विधिस्वीकारात्। एवं मध्यमपुरुषस्यापि न विधिशक्तिकुण्ठकत्वं युक्तम्, 'प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमुपास्स्व' इत्यत्र विधिस्वीकारात्। एवं न लङ्भक्तेर्विधिकुण्ठकत्वं युक्तम्, 'समिधो यजति' 'तनूनपातं यजति' 'औदुम्बरो यूपो भवति' 'उपांशुयाजमन्तरा यजति' इत्यादौ विधिस्वीकारात्। एवं हिशब्दस्य विधिप्रतिबन्धकत्वं न युक्तम्, 'उपरि हि देवेभ्यो धारयति' इत्यादौ विधिदर्शनात्। फलवाचकश्रूयमाणपदासमभिव्याहृतधारयतीत्युदाहृतस्थलादौ लटः प्रधानोपकारफलानुकूलादृष्टान्यतररूपप्रकरणादिकल्पितादृष्टसमानकालीनत्वमर्थः। साधनवाचकशब्दसमभिव्याहृतफलवाचकशब्दस्थलटः 'उदेति हि वै सर्वभ्यः पाप्मभ्यो य एवं वेद' इत्यादौ साधनानुष्ठानकालीनत्वमर्थः। न तु लोके 'पचति' इत्यादाविव शब्दप्रयोगाधिकरणक्षणवृत्तित्वम्, श्रुतिस्मृत्योस्तदसंभवात्। अपिशब्दस्तु समुच्चयविरोधगर्हासंभावनास्विति कोशव्याकरणयोः प्रसिद्धः। 'ईश्वरं गुरुमपि भजस्व' इत्यादौ अपिः समुच्चये, तद्वाक्यश्रवणे समुच्चयस्यैव पदसंदर्भस्वारस्येन प्रतीतेः। 'ईशान्नपि महायोगी सर्वस्य जगतो हरिः। कर्माण्यारभते कर्तुं कीनाश इव दुर्बलः' इत्युद्योगपर्वीयसंजयवाक्ये अपिः सर्वजगदीशितृत्वस्य देवतान्तराराधनात्मककर्मानुष्ठानेन विरोधं कथयति। इवशब्दः कर्मकरणस्य विडम्बनरूपत्वं द्योतयन्विरोधं परिहरति। तथा 'अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन्। प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया' इत्यत्र अपिशब्दः संभावनात्मकोत्पत्त्या साकमनुत्पत्तिमत्त्वरूपाजत्वाव्ययत्वसर्वभूतेश्वरत्वानां विरोधं कथयति। सन्निति शब्दः अजत्वादीनां सत्तां ज्ञापयन्नुत्पत्तेरसत्तारूपविडम्बनत्वबोधद्वारा विरोधं परिहरति। कर्माधीनशरीरग्रहणरूपोत्पत्तेः खल्वजत्वादिना विरोधः, न त्वैच्छिकतद्ग्रहणस्येति द्योतयितुं माययेति शब्दः। 'क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत' इत्यादौ चशब्देन क्षेत्रसमुच्चयस्य सिद्धत्वेन अपिशब्दो न समुच्चयार्थकः, अपि तु भगवति क्षेत्रज्ञ-

शब्दितजीवाभेदे समानाधिकरणनिर्देशसिद्धेऽनभिमतार्थस्वीकारविषयत्वरूपाम् 'तुष्यतु दुर्जनः' इति न्यायसिद्धां गर्हां कथयति। 'एवमप्यविमोक्षप्रसङ्गः' इत्यादावप्येवंशब्दोत्तरापिशब्दो गर्हार्थक एव, अपिशब्द एवंशब्दोत्तरत्वस्यानभिमतार्थस्वीकारार्थत्वप्रयोजकत्वस्य सर्वसंप्रतिपन्नत्वात् । 'चण्डालमपि वृत्तस्थं तं देवा ब्राह्मणं विदुः' इत्यत्रापिशब्दो वृत्तस्थत्वे चण्डालमपि ब्राह्मणं विदुः कः संदेहोऽन्यस्य ब्राह्मणादेर्वृत्तस्थत्वे ब्राह्मणपदव्यवहार्यत्वविषय इत्याकारिकां संभावनां कथयन्वृत्तस्थत्वं प्रशंसति; चण्डाले वृत्तस्थे ब्राह्मणपदव्यवहार्यत्वं संदिग्धमिति च ज्ञापयति, तथैव तद्वाक्यश्रवणे ज्ञानोत्पत्तेः सार्वजनीनत्वात् । 'स्थित्वास्यामन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति' 'स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम्' 'आर्तानामाशुफलदा सकृदेव कृता ह्यसौ । दुष्टानामपि जन्तूनां देहान्तरनिवारिणी' 'भुवि त्वां कथयन्तोऽपि सिद्धिमेष्यन्ति राघव' 'तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः' 'नीचादप्युत्तमां विद्यां स्त्रीरत्नं दुष्कुलादपि' 'दशप्रणवसंयुक्ताः प्राणायामास्तु षोडश । अपि भ्रूणहनं मासात्पुनन्त्यहरहः कृताः' इत्यादावप्यपिशब्दः संभावनार्थक एव, तस्या एवोदाहृततत्तद्वाक्यश्रवणे स्वरसतः प्रतीतेः । अपिशब्दस्य संभावनार्थत्वप्रयोजकं तु अल्पकालस्य कुत्सितदेशस्य च जातितः स्वभावतो गुणतः संख्यातो वा यदपकृष्टतया प्रतीयते तस्याल्पप्रयाससाध्यमहार्थसाधनक्रियात्वतः प्रतीयमानक्रियाया अत्युत्कटपापत्वेन प्रतीयमानपापस्य वा प्रतिपादकेन शब्देनाव्यवधानमित्यलम् । न च 'न चापि' इत्यत्रापिशब्दस्य न गर्हार्थत्वं युक्तम् 'अपि च' इति समस्तस्यैकाव्ययत्वात् 'चापि' इत्यस्य समुदायस्यैकाव्ययत्वसंभवादिति वाच्यम्, तस्यैवास्यैकाव्ययत्वस्य कोशादिष्वनुक्तेः ॥ ६ ॥

मन्त्रप्रसङ्गात्प्रसङ्गसंगत्या मन्त्रो निरूप्यते । **तच्चोदकेषु मन्त्राख्या** ॥ चोदकेषु विधिचोदिताध्ययनविषयीकृतेषु या मन्त्र इत्याख्या वैदिकानां तद्वत्त्वं तन्मन्त्रलक्षणमिति सूत्रार्थः । मन्त्रत्वम्, मन्त्रत्वजातिः ॥ ७ ॥

**वेदगतमन्त्रभागे निरूपिते अपरस्य ब्राह्मणभागस्योपस्थितत्वात्प्रसङ्ग-**

संगतिः । **शेषे ब्राह्मणशब्दः** ॥ शेषे मन्त्रव्यतिरिक्तवेदभागे ब्राह्मणमिति शब्दः वैदिकानां प्रसिद्ध इति सूत्रार्थः । ब्राह्मणत्वम्, विध्यर्थवादोपनिषत्साधारणधर्मविशेषः ॥ ८ ॥

मन्त्रातिरिक्तवेदत्वरूपब्राह्मणत्वे निरूपिते तद्घटकमन्त्रस्य स्वरूपं प्रसङ्गाद्विशेषतो निरूपयति । **अनाम्नातेष्वमन्त्रत्वमाम्नातेषु हि विभागः स्यात्** ॥ हि यस्मात् आम्नातेषु पदेषु मन्त्रब्राह्मणविभागः तस्मात् अनाम्नातेष्वमन्त्रत्वमेवेति सूत्रार्थः । (ऊहप्रवरनामधेयानामिति ।) ऊहः अग्निपदस्थाने सूर्यपदप्रक्षेपः, प्रवरः काश्यपादिः, नामधेयम् उच्चार्यमाणदेवदत्तादिपदम् ॥ ९ ॥

मन्त्रत्वं नानाम्नातवृत्तीत्युपपादिते मन्त्रत्वव्याप्या धर्मा उपस्थिता निरूप्यन्त इति प्रसङ्गसंगतिः । **तेषामृग्यत्रार्थवशेन पादव्यवस्था** ॥ तेषां मन्त्राणां मध्ये यत्र यस्मिन्मन्त्रे अर्थवशेन पादव्यवस्था 'अग्न आयाहि वीतये' इत्यादौ सा ऋक् इति सूत्रार्थः ॥ १० ॥

तत्प्रसङ्गाद्व्यापकधर्माधीनव्याप्योपस्थितेः प्रसङ्गसंगतिः । **गीतिषु सामाख्या** ॥ गीतिमन्त्रेषु सामेत्याख्येति सूत्रार्थः । सामत्वम्, साममन्त्रत्वम् ॥ ११ ॥

**शेषे यजुःशब्दः** ॥ शेषे ऋक्सामभिन्ने मन्त्रे यजुरिति शब्दः प्रसिद्ध इति सूत्रार्थः । तत्त्वात्, यजुष्ट्वात् ॥ १२ ॥

'इषे त्वा' इत्यादौ यथा यजुर्मन्त्र इति प्रसिद्ध्या ऋक्सामभिन्नो यजुर्मन्त्रः तथा 'नमः प्रवक्त्रे' इत्यादौ निगदमन्त्र इति प्रसिद्ध्या ऋक्सामयजुर्मन्त्रभिन्नो निगदमन्त्रः स्यादिति दृष्टान्तसंगतिः । **निगदो वा चतुर्थः स्याद्धर्मविशेषात्** ॥ निगदमन्त्रः उक्तत्रिविधमन्त्रापेक्षया चतुर्थः स्यात् 'उपांशु यजुषा, उच्चैर्निगदेन' इति यजुर्निगदयोर्धर्मविशेषकथनादिति पूर्वपक्षसूत्रार्थः । **गुणार्थो व्यपदेशः** ॥ ऋक्सामभिन्नमन्त्रत्वरूपयजुर्लक्षणाक्रान्ते निगदे 'उपांशु यजुषा, उच्चैर्निगदेन' इति यजुर्म्यो व्यपदेशभेदः उच्चैष्ट्वरूप-

गुणविधानार्थः, नातो निगदस्य यजुषः सकाशाद्भेदसिद्धिरिति सिद्धान्तसूत्रार्थः। (आश्विनादौ पारिप्लवशंसनं वेति ।) वाचःस्तोमकृतावाश्विनग्रहकाले 'सर्वा ऋचः सर्वाणि यजूंषि सर्वाणि सामानि पारिप्लवं शंसति' इति विहितपारिप्लव-संज्ञकशंसने निगदानां यजुःष्वेव शंसनं सिध्यति, तदभावे शंसनं न सिध्यतीति भावः ॥ १३ ॥

यजुष्ट्वे निरूपिते कियत्पदसमूहस्तदाश्रय इति प्रसङ्गात्तदाश्रयो निरूप्यते । **अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्** ॥ यद्विभज्यमानपदसाकाङ्क्षं पदजातं स्यात् तत् अर्थैकत्वात् एकविशिष्टार्थत्वात् एकं वाक्यमुच्यत इति सूत्रार्थः । (भिन्नप्रतीतीति ।) भिन्नपदजन्यपदार्थोपस्थितीत्यर्थः । व्रीहियववाक्ययोः, 'व्रीहिभिर्यजेत' 'यवैर्यजेत' इति वाक्ययोः । 'भगो वां विभजतु' इत्यादौ, 'भगो वा विभजतु' 'पूषा वां विभजतु' इत्यादौ । भिन्नप्रतीतिविषयत्वे, भिन्नभिन्नाख्यातजन्योपस्थितिविषयत्वे । (अर्थैकत्वमिति ।) स्यादिति शेषः ॥ १४ ॥

उक्तैकवाक्यत्वघटकविभज्यमानपदसाकाङ्क्षत्वस्य पर्याप्त्यधिकरणं किमिति पर्याप्त्यधिकरणस्योपस्थितत्वात्प्रसङ्गसंगत्या तन्निरूप्यते प्रत्युदाहरणमुखेण। **समेषु वाक्यभेदः स्यात्** ॥ समेषु अपर्यायपदाघटितपदसमूहेषु वाक्यभेद एव स्यात् साकाङ्क्षपदजातत्वाभावादिति सूत्रार्थः । (यथा 'इषे त्वा' इति ।) 'इषे' इत्यस्य 'ऊर्जे' इत्यस्य चान्नार्थकत्वादुभयत्र 'त्वा' इत्यनयोरेकार्थत्वात् 'इषे त्वा' 'ऊर्जे त्वा' इत्यनयोर्वाक्ययोरेकार्थत्वम्, आयुःप्राणशब्दयोरेकार्थत्वात् 'आयुर्यज्ञेन कल्पताम्' 'प्राणो यज्ञेन कल्पताम्' इत्यनयोश्च एकार्थत्वमिति भावः । ('क्लृप्तीर्वाचयति' इति बहुवचनादिति ।) उक्तबहुवचनसामर्थ्येन 'आयुर्यज्ञेन कल्पताम्' 'प्राणो यज्ञेन कल्पताम्' इत्युक्ताः क्लृप्त्यर्था भिन्ना इति भावः ॥ १५ ॥

वाक्यस्वरूपविचारप्रसङ्गात्तद्विषयं प्रकारान्तरं चिन्त्यते । **अनुषङ्गो वाक्यपरिसमाप्तिः सर्वेषु तुल्ययोगित्वात्** ॥ सर्वेषु 'या ते

अग्ने–' इत्यादिषु त्रिषु वाक्यपरिसमाप्तिः यस्यानुषङ्गेण, तस्य 'तनूर्वर्षिष्ठा' इत्यस्यानुषङ्गः; कुतः? तुल्ययोगित्वात् प्रथमेनैवोपरितनाभ्यामपि 'तनूर्वर्षिष्ठा' इत्यस्य तुल्यसंबन्धादिति सूत्रार्थः। अयाशया, अयः आशयं स्थानं यस्यास्तनोः सा अयाशया। वर्षिष्ठा, कामवर्षिणी। रजाशया, रजः आशयं यस्याः सा। हराशया, हरः आशयो यस्याः सा। हे अग्ने ते तव या अयाशया तनूः सा अस्माकं कामवर्षिष्ठा भूयादिति वाक्यार्थः॥ १६॥

पुनरपि प्रसङ्गाद्वाक्यविषयं प्रकारान्तरं चिन्त्यते। **व्यवायान्नानुषज्यते**॥ व्यवायात् असंबन्धिपदव्यवधानात् गच्छतामित्येतत् उत्तरत्र नानुषज्यते इति सूत्रार्थः। यजत्रैः, यजत्रैः सह॥ १७॥

इति भाट्टकल्पतर्वभिधायां भाट्टदीपिकाव्याख्यायां द्वितीयाध्यायस्य

**प्रथमः पादः।**

## द्वितीयः पादः।

धात्वर्थमुपजीव्यैव तद्भेदस्य तदवच्छिन्नभावनाभेदस्य च निरूप्यत्वाद्धात्वर्थपादेन पूर्वेण तद्भेदपादस्यास्योपजीव्योपजीवकभावः संगतिः। अनन्तरसंगतिस्तु स्तुतशस्त्राधिकरणेन वक्तव्या। तदुत्तराधिकरणानां प्रसक्तानुप्रसक्तविचारत्वात्। धात्वर्थभेदप्रयोजकस्य धात्वर्थस्य स्तुतशस्त्रान्ताधिकरणैर्निरूपितत्वेनास्य तेनावान्तरसंगतिः। **शब्दान्तरे कर्मभेदः कृतानुबन्धत्वात्**॥ शब्दान्तरे, यजिधातुशब्दाद्दाधातुः शब्दान्तरम्, तस्माद्यजिधातुः शब्दान्तरम्, एवरीत्या परस्परविजातीयार्थकधातुरूपशब्दान्तरे सति, कर्मभेदः भावनाभेदः, न ह्यत्र कर्मभेदशब्दो धात्वर्थभेदपरः, धात्वर्थभेदस्य शब्दान्तरपदान्तर्गततयैव प्रतीतेः; कृतानुबन्धत्वात् धात्वर्थभावनयोर्हेतुहेतुमद्भावेन कृतसंबन्धत्वात् विजातीयधात्वर्थरूपकार्यानुरोधेन कारणभूतभावनावैजात्यावश्यिकत्वादिति सूत्रार्थः। ज्योतिष्टोमपदं च, 'त्रिवृत्पञ्चदशसप्तदशएकविंश

एतानि वाव ज्योतींषि य एतस्य स्तोमाः' इति ताण्डिमहाब्राह्मणवचनरीत्या उक्तज्योतीरूपस्तोमविशिष्टयागाभिधायकज्योतिष्टोमपदं च । ज्योतींषि स्तोमा यस्य यागस्य स ज्योतिष्टोम इति विग्रहः । छत्रिन्यायेन, 'छत्रिणो यान्ति' इत्यत्र च्छत्रिपदस्य च्छत्र्यच्छत्रिसमुदाय इव ज्योतीरूपस्तोमयुक्तयागतद्भिन्नदानहोमघटितसमुदाये ज्योतिष्टोमपदं नामधेयमिति भावः । मूलोक्तात्, शाबरभाष्योक्तसंख्यातः । प्राप्तभावनानुवादेन, फलवाक्यविहितभावनानुवादेन । सोमयागाद्यनेकविधाने, 'सोमेन यजेत' इति वाक्येन सोमयागयोर्द्वयोर्विधाने 'हिरण्यमात्रेयाय ददाति' इत्यनेन हिरण्यस्य आत्रेयस्य दानस्य च विधाने । वाक्यभेदापत्ते:, सोमादिवाक्येषु प्रत्येकं वाक्यभेदापत्तेः ॥ १ ॥

शब्दान्तराद्भावनाभेदे निरूपिते 'समिधो यजति' इत्यादौ तदभावाद्भावनाभेदो न स्यादिति प्रत्युदाहरणसंगतिः । **एकस्यैवं पुनःश्रुतिरविशेषादनर्थकं हि स्यात्** ॥ अविशेषेण एकस्य एकजातीयस्य पुनः पुनः श्रवणम् एवं शब्दान्तरवद्भावनाभेदसाधकम् अन्यथा पुनर्वचनमनर्थकं स्यादिति सूत्रार्थः । सूत्रे अविशेषादित्यनेन पुनः श्रवणेऽनन्यपरत्वं विवक्षितम्, तेन 'अग्निहोत्रं जुहोति' इति विहितहोमोद्देशेन दध्यादिरूपान्यविधिपरं 'दध्ना जुहोति' इति वाक्यगतजुहोतिपदं तु न कर्मभेदविधिः । एकत्वसाधकत्वेन, अभेदसाधकत्वेन । समित्प्राप्तिः, प्रथमवाक्योक्तसमिद्देवतायाः प्राप्तिः । सा, प्रथमवाक्योक्तप्रयाजयागे देवतात्वेन प्राप्तिः । (तनूनपादादिशब्दितानामपीति ।) देवतानामिति शेषः । अविशिष्टा, समिद्देवतातुल्या । ननूपांशुयाजे याज्यामन्त्रेण देवताप्राप्तेर्न तत्र समिदादिवाक्यैर्देवताविधिः संभवतीत्यत आह— न च संभवत्प्राप्तिकतेति । तेषाम्, समिदादिवाक्यानाम् । उपपदार्थस्य, समिध इत्याद्युपपदार्थस्य देवतायाः ॥ २ ॥

यथा समिदादिवाक्येष्वभ्यासात्कर्मभेदस्तथा 'य एवं विद्वान्—' इत्यादिविद्वद्वाक्ययोरपि कर्मभेदः स्यात्प्रकृताग्नेयादिभ्य इति दृष्टान्तसंगतिः । **प्रकरणे तु पौर्णमास्यां रूपावचनात्** ॥ पौर्णमास्याम् 'पौर्णमासीम्'

'अमावास्याम्' इत्यादिपदघटितविद्वद्वाक्ययोः प्रकरणं प्रकृतमाग्नेयादियागजातमभिहितं नापूर्वयागान्तरम् अपूर्वयागापेक्षितद्रव्यदेवतारूपाभावात् इति सूत्रार्थः। तत्रत्य एव, दर्शपूर्णमासप्रकरणस्थ एव। ('यो दीक्षितः' इतिवदिति।) 'यो दीक्षितः, यदग्नीषोमीयं पशुमालभते' इत्यत्र य इत्यस्य संनिहितदीक्षाविधिप्रतिबन्धकत्वेऽपि व्यवहितपश्वालम्भविध्यप्रतिबन्धकत्ववत् अत्रापि य इत्यस्य संनिहितवेदनविधिप्रतिबन्धकत्वेऽपि व्यवहितयज्यर्थविधिप्रतिबन्धकत्वाभावादित्यर्थः। अत एव, विधिप्रतिबन्धकाभावेन विहितयागयोर्नामधेयापेक्षावशादेव। ननु पौर्णमास्यादिपदस्य विद्वद्वाक्यस्थस्य नामत्वे तद्वाक्यविहितकर्मणोरपेक्षितकालालाभ इत्यत आह– पौर्णमास्यां पौर्णमास्येतीति। (कर्माङ्गत्वेन विधानादिति।) वार्त्रघ्नीवृधन्वतीमन्त्राणामिति शेषः। तत्साधारण्येन, प्रयाजादिसाधारण्येन। तयोरेव, विद्वद्वाक्यविहितकर्मणोरेव। एवकारेणाग्नेयादिव्यवच्छेदः। दर्शपूर्णमासप्रतिपादकस्येत्यारभ्य सर्वेषामेव यागानां फलसंबन्ध इत्यन्तः प्रथमपक्षस्योत्पादकः। (प्रातिपदिकस्याप्रसिद्धत्वादिति।) आज्यभागयोः पौर्णमास्यमावास्याकालयुक्तत्वेन विध्यदर्शनात्तत्र प्रातिपदिकाप्रसिद्धिरिति भावः। पाशाधिकरणन्यायेनेत्यारभ्य कालयोगिनामेत्यन्तः प्रातिपदिकप्राधान्यावलम्ब्युत्प्रेक्षितपक्षाभिप्रायकः। (कालयोगिनामिति।) अस्य उपरितनफलसंबन्ध इत्यनेनान्वयः। पाशाधिकरणन्यायेनेत्यस्य प्रातिपदिकमात्रप्रसिद्ध्या इत्यनेनान्वयः। अनयोरेवेत्यारभ्य फलसंबन्ध इत्यन्तः प्रत्ययप्राधान्यावलम्ब्युत्प्रेक्षितपक्षाभिप्रायकः। अत एव, व्यवस्थाविधायकत्वादेव। नन्वाज्यभागयोः पौर्णमास्यमावास्याकालसंयोगविध्यदर्शनात्कालद्वारा कथं तयोर्मन्त्रव्यवस्थेत्यत आह– कर्मद्वारेण वेति। (तस्येति।) अस्य अज्ञातज्ञापनस्येत्येकोऽर्थः, अनेकविषयत्व इत्यत्र तदन्वयः; क्लृप्तैकविषयत्वस्येत्यपरोऽर्थः, बाधकप्रसङ्ग इत्यनेन तदन्वयः। (वृत्तित्वसंबन्धेनेति।) अत्र तृतीयार्थोऽभेदः, तस्य बहुत्वलक्षणायां त्वेतद्घटकलक्षणायामन्वयः। (उपादानावगतेति।) उपादानसामर्थ्यावगतेत्यर्थः। (न 'वैश्वदेवेन यजेत' इतिवदिति।) यथा 'वैश्वदेवेन यजेत' इति वाक्यगत-

यजिर्यागाष्टकानुवादक इति न तत्राभ्यासः तथात्रापीति भावः ॥ ३ ॥

विद्वद्वाक्यवद्रूपाभावादन्तरावाक्यं समुदायानुवादकं स्यादिति दृष्टान्तसंगतिः। **पौर्णमासीवदुपांशुयाजः स्यात्** ॥ पौर्णमासीवत् पौर्णमासीपदघटितविद्वद्वाक्यवत् उपांशुयाजपदघटितमन्तरावाक्यं विष्ण्वादिवाक्यसिद्धयागसमुदायानुवादकं स्यादिति पूर्वपक्षसूत्रार्थः । **चोदना वाप्रकृतत्वात्** ॥ विष्ण्वादिवाक्यविहितयागानामुपांशुयाजवाक्यात्पूर्वमप्रकृतत्वात् अन्तरावाक्यस्य तदनुवादकत्वानुपपत्तिरित्यन्तरावाक्ये कर्मचोदनैवेति सिद्धान्तसूत्रार्थः। **गुणोपबन्धात्** ॥ जामितानिर्हरणरूपगुणस्य उपक्रमोपसंहारयोरुपबन्धात् जामितानिवर्तकैकार्थविधिपरत्वावगत्या बहूनां विष्ण्वादिवाक्यानां विधायकत्वानुपपत्तिः, किं त्वन्तरावाक्यविहितयागस्य पूर्वोत्तरसंदर्भः कृत्स्नोऽप्यर्थवाद इति सूत्रार्थः। तत्रैव, दर्शपूर्णमासप्रकरण एव । जामिवा आलस्यम् । अन्वञ्चौ अव्यवधानेन वर्तमानौ पुरोडाशौ । यस्माद्यज्ञस्य पुरोडाशावन्वञ्चौ तस्मादालस्यं क्रियत इति योजना। तत्प्रयोजनं च, अनुवादप्रयोजनं च । आज्यस्यैव, आज्येनैव। नौ, आवाम् । कालसंबन्धात्, पौर्णमासीकालसंबन्धात्। (फलसंबन्धः स्यादितीति।) 'दर्शपूर्णमासाभ्याम्–' इत्यधिकारवाक्येण दर्शपूर्णमासकालसंबन्धिनामेव फलबोधनादिति भावः । एकविषयत्वेन, जामितादोषपरिहारैकक्रियाविषयकत्वेन । अत एव, वाक्यभेदापत्तेरेव । अन्यथेत्यस्य पुरोडाशान्तरालकालेत्यारभ्य फलसंबन्धोपपत्तावित्यन्तं विवरणम् ॥ ४ ॥

वाक्यभेददोषस्य पूर्ववदत्राभावादग्निहोत्रवाक्ये समुदायानुवादः स्यादिति प्रत्युदाहरणसंगतिः । **आघाराग्निहोत्रमरूपत्वात्** ॥ 'आघारमाघारयति' 'अग्निहोत्रं जुहोति' इति वाक्यं न विधायकम्, किं तु 'दध्ना जुहोति' 'संततमाघारयति' इत्यादिवाक्योक्तकर्मसमुदायानुवादकम्; कुतः? द्रव्यदेवतादिरूपरहितत्वादिति पूर्वपक्षसूत्रार्थः। **चोदना वा शब्दार्थस्य प्रयोगभूतत्वात्तत्संनिधेर्गुणार्थेन पुनःश्रुतिः** ॥ वाशब्दः पूर्वपक्ष-

व्याकृत्यर्थः । उक्तवाक्यद्वये चोदना विधिः कर्मण आश्रयितव्यः, शब्दार्थस्य अग्निहोत्रसंज्ञकहोमस्य आघारसंज्ञकयागस्य च प्रयोगभूतत्वात् अनुष्ठेयत्वयोग्यत्वात् 'दध्ना जुहोति' 'संततमाघारयति' इत्यादीनाम् 'अग्निहोत्रं जुहोति' 'आघारमाघारयति' इति वाक्यसंनिहितत्वात् अग्निहोत्राघारवाक्यविहितकर्मापेक्षितगुणार्थं दधिसंततादिवाक्येषु जुहोतीत्यंशस्य आघारयतीत्यंशस्य चानुवादरूपपुनःश्रुतिरिति सिद्धान्तसूत्रार्थः । सर्वेषामेव, सर्वहोमानामेव । इतरथा; समुदायानुवादाभावेनाग्निदैवत्यानग्निदैवत्यहोमसामान्यस्याग्निहोत्रसंज्ञाया अलाभे । (द्रष्टव्यमिति ।) 'चतुर्गृहीतं वा एतदभूत्तस्याघारमाघार्य' इत्यस्मिन्वाक्ये प्रयाजाज्यरूपे संस्कार्ये आघारविनियोजके सर्वेषामेवाघाराणां ग्रहणं समुदायानुवादप्रयोजनमिति द्रष्टव्यमित्यर्थः । कर्मविध्यनुपपत्तिः, अज्ञातकर्मविषयकशाब्दबोधानुपपत्तिः । तस्य, रूपज्ञानस्य ॥ ९ ॥

कर्मप्राप्त्यभावादग्निहोत्रवाक्ये कर्मसमुदायानुवादाभावेऽपि अत्र तत्प्राप्तेर्हृदयादिवाक्यैर्ग्रहणवाक्यैश्च संभवात्समुदायानुवादः पशुवाक्ये सोमवाक्ये च स्यादिति प्रत्युदाहरणसंगतिः । **द्रव्यसंयोगाच्चोदना पशुसोमयोः प्रकरणे ह्यनर्थको द्रव्यसंयोगो न हि तस्य गुणार्थेन** ॥ पशुसोमयोः 'अग्नीषोमीयं पशुमालभेत' 'सोमेन यजेत' इत्यनयोर्वाक्ययोः चोदना विधिः न समुदायानुवादः; कुतः? द्रव्यसंयोगात् हृदयादिवाक्यग्रहणवाक्योक्तहृदयत्वरसत्वादिभिन्नपशुत्वसोमत्वजात्यवच्छिन्नद्रव्यबोधकपशुसोमपदसंयोगात् प्रकरणे प्रकृते हृदयादिद्रव्यककर्मणि गृह्यमाणे पशुसोमद्रव्यसंयोगः अनर्थकः स्यात् तस्य उक्तद्रव्यसंयोगस्य गुणार्थेन यागगुणप्रतिपादनेन प्रयोजनं न संभवतीति सूत्रार्थः । न तदुद्देशेनेत्यादेर्विधिरित्यन्तस्य ग्रन्थस्य अङ्गत्वेनाविहिते संस्कारयोग इत्यत्र तात्पर्यम् । (पूतीकवदिति ।) यथा 'पूतीकमभिषुणोति' इति संस्कारविधिबलात्पूतीकस्य यागसाधनत्वं तथा हृदयादीनां संस्कारविधिबलात्तत्साधनत्वमनुमीयत इति भावः । तेनैव, 'आलभेत' इत्यनेनैव । व्रीहिविधिवत्, पुरोडाशप्रकृतित्वेन 'व्रीहिभिर्यजेत' इति व्रीहिविधिवत् । अस्मि-

न्पक्षे, पूर्वपक्षे । (अस्तुतशस्त्राणामिति ।) यागानामिति शेषः । (वैश्वदेववदिति ।) विश्वेदेवदैवत्यान्यदैवत्ययागघटितसमुदाये वैश्वदेवपदं यथा गौणं तथा ज्योतीरूपस्तोमयुक्तयागतद्युक्तयागघटितसमुदाये ज्योतिष्टोमपदं गौणमिति भावः । तद्वशात्, ज्योतिष्टोमनामवशात् । (ज्योतिष्टोमपदे बहुव्रीह्यर्थेस्त्विति ।) पूर्वपक्षरीत्येति शेषः । (अतिदेशेति ।) दर्शपूर्णमासादतिदेशेऽर्थः । (निरूपकतासंबन्धेनेति ।) त्यज्यमानद्रव्योद्देश्यत्वरूपदेवतात्वस्य त्यागरूपयागनिरूपितत्वाद्देवतात्वनिरूपकत्वं ग्रहणस्य न संभवतीति भावः । एवं सति, सोमवाक्यस्य यागविधायकत्वे तद्यागस्यैकत्वे च सति । आवृत्तिः, अभ्यासः । मा, अवदानगणप्राप्तिः । अव्यक्तत्वसिद्धिः, स्वाङ्गतयानभिहितदेवताकत्वसिद्धिः ॥ ६ ॥

यथा ग्रहणभेदेऽपि लाघवात्प्रतिग्रहणं यागस्यावृत्तिः तथा एकस्य होमस्य त्रिवारमावृत्तिः स्यादिति दृष्टान्तसंगतिः । **पृथक्त्वनिवेशित्वात्संख्यया कर्मभेदः स्यात्** ॥ द्वित्वादिसंख्यायाः स्वाश्रयप्रतियोगिकस्वाश्रयवृत्तिभेदव्याप्यत्वरूपपृथक्त्वनिवेशित्वात् द्वित्वत्रित्वादिरूपसंख्यया कर्मभेदः स्यात् स्वाश्रयकर्मरूपधात्वर्थभेदः स्यादिति सूत्रार्थः । अन्वयानुपपत्तेः, भावनान्वयानुपपत्तेः । प्रथमातिक्रमे, संख्यासु प्राथमिकैकत्वातिक्रमे । अत एव, श्रुतसंख्यायाः संख्यानुमितिप्रतिबन्धकत्वादेव । प्रकृते, दर्शपूर्णमासीय-'समिधो यजति' -इत्यादौ । प्रकृतिविकृतिशून्यविराट्संपत्तिवाक्ये उत्पत्तिवाक्यप्रकरणस्थेऽनुमानप्रतिबन्धकमस्तीत्याशङ्क्य- न चैवमिति । न चैवमित्येतद्घटकस्य एवमित्यस्य श्रुतसंख्याया अश्रुतसंख्यानुमानबाधकत्वे इत्यर्थः । उत्पत्तिवाक्ये, इतरपदाविशेषित-'अग्निहोत्रं जुहोति'-इति वाक्ये । (स्वोपजीव्येनि ।) विराट्संपत्तिवाक्योपजीव्येत्यर्थः । तस्य, तद्वाक्यस्थविराट्छन्दितदशत्वस्य । तदावृत्तिः, मन्त्रावृत्तिः । (यद्यपीत्यादि ।) यद्यपि 'देवतात्वविशिष्टद्रव्यविशेषवाची तद्धितः' इति ग्रन्थोऽसंगतः सोऽपि देवतात्वान्वयोत्तरमित्युपरितनग्रन्थेन देवतात्वद्रव्ययोस्तद्धितस्य पृथग्वृत्तिप्रतीतेः, तथापि यद्य-

पीत्यनेनैव तत्पक्षेऽस्वरससूचनान्नासंगतिः । प्राजापत्यपद एवेत्येवकारेण प्रजापतिपदे एकशेषव्यवच्छेदः । सोऽपि, संख्यान्वयोऽपि । सोऽपीत्येतद्देवतात्वे द्रव्ये च तद्धितस्य पृथक्छक्तिपक्षे इति बोध्यम्, विशिष्टशक्तिपक्षे द्रव्ये देवतात्वान्वयस्यैवाप्रसक्तेः । देवतात्वप्रतिसंबन्धिनि, देवतात्वस्य विशेष्ये । साहित्यानवगमेन, देवतात्वान्वयात्पूर्वकाले द्रव्ये साहित्यरूपान्वयितया साहित्यस्य देवतात्वसंबन्धितावच्छेदकत्वानवगमेन । अनेकत्वावगमात्, बहुत्वान्वयवशेन देवतात्वसंबन्धिद्रव्यानेकत्वावगमात् । तत्संबन्धभेदेन, 'विशिष्टान्वयिनि विशेषणान्वयः' इति रीत्या देवतात्वरूपसंबन्धभेदेन । प्रकृतिप्राप्तेत्यादेरुत्तरमन्वय इत्यन्तस्य पशुयागसामान्यप्रकृतावग्नीषोमीये एकत्वविशिष्टो यः पशुस्तादृशपशुनिष्पन्नैकादशावदानसमुदायस्य यदेकत्वं स्वाश्रयद्वारा विकृतौ प्राजापत्यपशुयागे सप्तदशपशुद्रव्यके त्वदुक्तरीत्या एकस्मिन्यागे अतिदेशेन प्राप्यते, तस्य सप्तदशपशूनां मध्ये य एकः पशुः तत्प्रभवैकादशावदानगण एव पर्यवसिततया अवशिष्टषोडशपश्ववदानगणेषु न प्राप्तिः स्यादित्येकस्मादेव पशोरवदानान्यन्येभ्यो नावदानापत्तिरिति स्यात्; अस्मदुक्तरीत्या यागस्य सप्तदशत्वे तु एकैकस्मिन्प्राजापत्यपशुयागे प्रत्येकं प्रत्येकमेकादशावदानगणैकत्वातिदेशेन सर्वेष्वेव प्राजापत्यपशुष्ववदानानि प्राप्स्येरन्निति भावः । (सूक्तहविषोरित्यादीति ।) यद्यपि 'सास्य देवता' इति व्याकरणसूत्रं तथापि तदर्थमादाय 'सूक्तहविषोः' इति स्मृतिरित्युक्तम् । (पश्वेकताप्रापीति ।) एकपशुनिष्पन्नैकादशावदानगणैकत्वप्राप्तिफलकपश्वेकताप्रापीत्यर्थः । तस्य, यागस्य । तत्, पुनर्यागकरणम् ॥ ७ ॥

भेदव्याप्तत्वाद्वित्वादिकया संख्यया यथा कर्मभेद उक्तः तद्वत्प्रकृते भेदकप्रमाणाभावान्न कर्मभेदो ज्योतिरादिवाक्येष्विति प्रत्युदाहरणसंगतिः ।

**संज्ञा चोत्पत्तिसंयोगात्** ॥ चकार उत्सूत्रपूर्वपक्षव्यावृत्त्यर्थः । संज्ञा ज्योतिरादिसंज्ञा प्रकृतज्योतिष्टोमाज्ज्योतिरादिवाक्योक्तं कर्म भिनत्ति; कुतः? अज्ञातकर्मज्ञापकत्वरूपोत्पत्तिप्रत्यपूर्वसंज्ञाया व्याप्यत्वरूपसंयोगादिति सूत्रार्थः ।

तदापत्तेः, प्रसिद्ध्यापत्तेः । (एतच्छब्देन च तद्विधान इति ।) तृतीयान्तै-तच्छब्देन ज्योतीरूपगणविधाने 'सहस्रदक्षिणेन' इति सहस्रदक्षिणायाश्च विधानावश्यिकतया विधेयानेकत्वप्रयुक्तवाक्यभेदो दुर्वार इति भावः । न च ज्योतिःशब्दस्य गुणपरतया विधायकत्वे कथिते 'एतेन—' इति वाक्यान्तरस्थै-तच्छब्दस्य गुणविधायकत्वापत्त्या वाक्यभेदापादनमयुक्तमिति शङ्क्यम्, तृतीयान्तैतच्छब्दस्य सर्वनामतया संनिहितपरत्वेन ज्योतिःशब्देन बुद्धिसंनिधापितं यत्तस्यैव तेन परामर्शनीयतया वाक्यभेदापादनस्य सुसंगतत्वात् । तेषाम्, ज्योतिर्विश्वज्योतिःसर्वज्योतिःशब्दानाम् । (अधिकारेति ।) प्रकरणेत्यर्थः । भेदानापत्तिः, उद्भिद्वाक्यविहितकर्मणः सोमयागाद्भेदानापत्तिः । (तत्तद्वाक्यै-रुत्पन्नमिति ।) 'अथैष ज्योतिरेतेन सहस्रदक्षिणेन यजेत' 'अथैष विश्व-ज्योतिरेतेन सहस्रदक्षिणेन यजेत' 'अथैष सर्वज्योतिरेतेन सहस्रदक्षिणेन यजेत' इति वाक्यैरुत्पन्नमित्यर्थः । एतेनेत्यादेः सकृच्छ्रुतस्याप्यावृत्त्या अथशब्दघटितेषु त्रिषु खण्डेषु संबन्धेन वाक्यत्रयसंपादनमवश्यं कार्यम् अन्यथा 'अथैष विश्व-ज्योतिः' 'अथैष सर्वज्योतिः' इति खण्डद्वयस्थाथशब्दयोः 'अथैष ज्योतिः' इत्युक्तयागाधिकारविच्छेदकत्वानुपपत्तेरथशब्दयोर्व्यर्थत्वापत्तेः ज्योतिर्विश्वज्यो-तिःसर्वज्योतिःशब्दानामेकयागसंज्ञात्वस्य कथंचिदुपपादनेऽपि तत्तत्समभिव्याहृताथशब्दवशात्तत्तत्संज्ञाश्रययागभेदसिद्धिर्निष्प्रत्यूहेति सिद्धम् ॥ ८ ॥

प्रकरणविच्छेदकाथशब्दवशेन कर्मभेदः स्थापितः; तद्वत्प्रकृते कर्मभेदकाभावान्न वाजिनगुणः कर्म भिनत्तीति प्रत्युदाहरणसंगतिः । **गुणश्चापूर्वसंयोगे वाक्ययोः समत्वात्** ॥ पूर्वेण 'अग्निहोत्रं जुहोति' इति पूर्ववाक्योक्तेन कर्मणा अग्निहोत्रहोमेन संयोगः 'दध्ना जुहोति' इति वाक्योक्तदधिगुणस्य संयोगः पूर्वसंयोगः, न पूर्वसंयोगोऽपूर्वसंयोगः, पूर्वकर्मसंयोगासंभव इति यावत्; वाजिनगुणश्च स्ववाक्योक्तं कर्म स्वपूर्वामिक्षावाक्योक्तकर्मणो भिनत्ति; कुतः? वाक्ययोः समत्वात् वाजिनवाक्यामिक्षावाक्ययोः द्रव्यदेवतासंबन्धप्रतिपादनद्वारा विजातीययागकल्पकत्वस्य कल्पितयागयोः तत्तत्स्ववाक्य एवापेक्षित

द्रव्यदेवतागुणलाभेन वाक्यान्तरस्थगुणानपेक्षत्वस्य च तुल्यत्वादिति सूत्रार्थः । गुणमात्रेति मात्रशब्देन कर्मव्यवच्छेदः । (तद्विशिष्टेति ।) विश्वेदेवविशिष्टेत्यर्थः । श्रुत्योक्तम्, शक्त्योक्तम् । अनुशासनात्, 'सास्य देवता' इत्यनुशासनात् । तस्याः, देवतायाः । पूर्वत्र, आमिक्षायागे । अनिविशमानत्वेन, उत्पत्तिशिष्टगुणेनोत्पन्नशिष्टगुणस्यैकाधिकरण्याभावेन । सा च, भेदकृता च ॥ ९ ॥

उत्पत्तिशिष्टगुणावरुद्धे उत्पन्नशिष्टगुणानिवेशो निरूपिते तदनवरुद्धे उत्पन्नशिष्टगुणनिवेश इत्यर्थसिद्धमर्थमत्र स्फुटयतीति सिद्धकथनं संगतिः । इयं संगतिरापवादिकसंगतिवत्प्रायिकी । अत एवावान्तरसंगतिप्रभेदनिरूपणावसरे नोक्तेति ध्येयम् । **अगुणे तु कर्मशब्दे गुणस्तत्र प्रतीयेत** ॥ गुणवाचकशब्दरहिते 'अग्निहोत्रं जुहोति' इति कर्मशब्दे सति तत्र अगुणवाक्योक्तकर्मणि 'दध्ना जुहोति' इत्यादिना दध्यादिगुणः प्रतीयेतेति सूत्रार्थः । 'सगुणे उत्पत्तिवाक्ये वाक्यान्तरेणोत्पन्नशिष्टगुणो विधातुं न शक्यते' इति न्यायोऽनेन सूत्रेण सूचितः । तत्र, अग्निहोत्रहोमे ॥ १० ॥

यथा 'दध्ना जुहोति' इति वाक्यसिद्धगुणस्य निर्गुणवाक्योक्तकर्मणि निवेशः तद्वत् 'दध्नेन्द्रियकामस्य जुहुयात्' इति वाक्योक्तगुणस्यापि स्यादुत्पन्नशिष्टगुणविषयकत्वस्य द्वयोस्तुल्यत्वादिति दृष्टान्तसंगतिः । **फलश्रुतेस्तु कर्म स्यात्फलस्य कर्मयोगित्वात्** ॥ इन्द्रियफलश्रवणादिन्द्रियकामवाक्ये अग्निहोत्रहोमात्पृथक्कर्म धातुना उक्तं स्यात्; कुतः? फलस्य कर्मसंबन्धित्वात् गुणमात्रानन्वयित्वादिति पूर्वपक्षसूत्रार्थः । **अतुल्यत्वात्तु वाक्ययोर्गुणे तस्य प्रतीयेत** ॥ तुः पूर्वपक्षव्यावृत्त्यर्थः । 'अग्निहोत्रं जुहुयात्स्वर्गकामः' इति कर्मणः फलसंबन्धविधायिवाक्येन 'दध्नेन्द्रियकामस्य—' इति गुणफलयोः संबन्धविधायकवाक्यस्य अतुल्यत्वात् गुणे दधिरूपगुणे तस्य इन्द्रियफलस्य, षष्ठ्यर्थः संबन्धः, इन्द्रियफलसंबन्ध इति यावत्, प्रतीयेतेति सिद्धान्तसूत्रार्थः । कर्तुर्हि प्रयोगान्वयित्वात्, कर्तव्यत्वरूपप्रयोगघटकक्रतौ

कर्तुः समवायसंबन्धेनान्वयित्वात् । फलस्य च विनियोगान्वयित्वात्, जनकत्वरूपे विनियोगे निरूपितत्वस्वरूपसंबन्धेन फलस्यान्वयित्वात् । उत्पन्नस्यापि, वाक्यान्तरेण ज्ञातस्यापि । कर्मणः प्रयोगविधौ, कर्मविषयकप्रयोगविधौ । फलविशिष्टविनियोगस्य, फलनिरूपितजनकत्वस्य । (वैशिष्ट्योपपत्तिरिति ।) विधीयमानप्रयोगेणेति शेषः । तथा चोक्तकर्मविषयकप्रयोगस्य वाक्यान्तरेणाप्राप्तत्वात्समवायस्वरूपसंबन्धाभ्यां कर्त्रा फलनिरूपितजनकत्वात्मकविनियोगेन च विशिष्टस्य प्रयोगस्य विधौ प्राप्तानुवादेनानेकविधानाभावान्न वाक्यभेद इति भावः । उत्पत्त्यन्वयित्वेन, देवतोद्देश्यकद्रव्यत्यागात्मकयागहोमादिस्वरूपकर्मघटकत्वेन । प्राप्तोत्पत्त्यनुवादेन, निर्गुणवाक्यप्राप्तकर्मस्वरूपानुवादेन । गुणविधिः, दधिगुणविधिः । (फलविशिष्टविनियोगविधिश्चेति ।) इन्द्रियफलनिरूपितजनकत्वविधिश्चेत्यर्थः । (वैशिष्ट्याभावादिति ।) निर्गुणवाक्यप्राप्तहोमेन साकमिति शेषः । तथा च वाक्यान्तरप्राप्तहोमे स्वान्यवाक्येन गुणस्य फलविशिष्टविनियोगस्य च द्वयोः संबन्धविवक्षायाम् 'प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः' इत्युक्तवाक्यभेद इति भावः । अतः, वाक्यभेदापत्तेः । (गुणात्कर्मभेद इति ।) वाक्यभेदापादकगुणत्वं कर्मभेदप्रयोजकमिति पूर्वपक्ष्याशयः । तत्, कर्म । दर्वीहोमत्वे, प्रकृतिविकृतिभावशून्यहोमत्वे । सत्यपीत्यपिशब्देन प्रकृतिविकृतिभावरहितत्वादनुपदं वक्ष्यमाणः सादृश्यनिमित्तातिदेशो न संभवतीति सूच्यते । वचनं विना, होमवाचकशब्दं विना । फलोत्पत्तिसंभवात्, गुणस्य फलसाधनताबोधसंभवात् । वचनवैयर्थ्यप्रसङ्गेन, होमवाचकशब्दवैयर्थ्यप्रसङ्गेन । (स्वकृतिसाध्येति ।) स्वं गुणः तत्करणिका या कृतिः तत्साध्येत्यर्थः । गुणसंबन्धिनः, जन्यतासंबन्धेन गुणविशिष्टस्य । आश्रयस्य, जन्यस्य । प्राप्तभावनानुवादेन, निर्गुणवाक्यप्राप्तभावनानुवादेन । उभयकरणे, गुणस्य फलस्य च संबन्धकरणे । (यागवैषम्य इति ।) यागस्य फलकरणत्वं साक्षात्, दध्नस्तु करणत्वद्वारकं फलकरणत्वमिति वैषम्यमिति भावः । यत्तु एतदधिकरणपूर्वपक्षे वाक्यभेदापादकोत्पत्त्यन्वयिगुणः कर्मभेदक इत्युक्तिरयुक्ता

अभ्युदयेष्टिवाक्ये उक्तविधगुणस्य कर्मभेदकत्वमनङ्गीकृत्य भावनामात्रभेदकत्व-स्वीकारादिन्द्रियकामवाक्येऽपि तथा संभवे कर्मभेदपूर्वपक्षोऽसंगत इति; तन्न, अभ्युदयवाक्ये प्रकृतकर्मोपस्थापकयच्छब्दसत्त्वेन उक्तविधगुणस्य न कर्मभेद-कत्वम्, प्रकृते तदभावेनोक्तविधगुणस्य कर्मभेदकत्वमिति पूर्वपक्ष्याशयात्॥११॥

यथा धात्वर्थस्य प्राप्तत्वे दधिगुणयुक्तं फलं न धात्वर्थयुक्तं तथात्रापि रेवत्यादिगुणयुक्तं फलं स्यात् धात्वर्थस्य प्राप्तत्वादिति दृष्टान्तसंगतिः। **समेषु कर्मयुक्तं स्यात्**॥ समेषु परस्परसदृशेषु वायव्यरेवत्यादिवाक्येषु कर्म-युक्तं धात्वर्थयुक्तं फलं स्यात् न गुणयुक्तं स्यादिति सूत्रार्थः। त्रिवृदित्यादे-रयमर्थः– अग्निष्टोमस्य विकृतिरूपः अग्निष्टुन्नामक एकाहः। स च पृष्ठस्तोत्रे त्रिवृत्स्तोमयुक्ततया त्रिवृत्, अग्निष्टोमादिसप्तसंस्थानां मध्ये अग्निष्टोमसंस्थया समाप्यमानत्वादग्निष्टोमः। प्रकृतौ तृतीयसवने आर्भवपवमानस्योपरि यज्ञाय-ज्ञीयं साम गीयते, तेन च साम्ना अग्निष्टोमयागस्य समाप्यमानत्वाद्यज्ञायज्ञीय-मग्निष्टोमसामेत्युच्यते। तच्च साम प्रकृतौ 'यज्ञा यज्ञा वो अग्नये' इत्याग्नेयीषु ऋक्षु गीयते। अस्मिन्नाग्निष्टुति तु ब्रह्मवर्चसकामेन वायव्यासु ऋक्षु तत्साम गातव्यम्। तत्प्रकृताविव एकविंशतिस्तोमयुक्तम्, अग्निष्टुद्यागविकारे रेवती-वाक्यविहिते कर्मणि 'रेवतीर्ण–' इत्यादिऋक्षु वारवन्तीयमग्निष्टोमसाम गाये-दिति। 'तस्य वायव्यासु–' इति श्रुतिगत-'तस्य'– इत्यनेन वायव्यास्वग्निष्टु-त्संबन्धोऽनूद्यते। (पूर्ववदाद्यः पूर्वः पक्ष इति।) इन्द्रियकामवाक्य इव रेवत्या-दिगुणविशिष्टः स एवाग्निष्टुद्यागः पशुफलोद्देशेन विधीयत इति प्रथमपूर्वपक्ष इत्यर्थः। स्वकारकेत्यादेः, स्वम् 'अग्निष्टोमसाम' इति पदोपात्तमग्निष्टोमस्तोत्रम्, तस्य कारकम् 'रेवतीषु–' इति पदोपात्तऋङ्निष्ठाधिकरणत्वम्, निरूपकता-संबन्धेन तद्विशिष्टं यत्स्तोत्रम्, तद्विषयिणी या कृञ्धातूपात्ता भावना, तद्वि-शिष्टो यः क्त्वाप्रत्ययार्थो भूतकालाख्यप्रयोगान्वयिगुणः, तस्य सत्त्वेनेत्यर्थः। (न त्वत्रेति।) रेवतीवाक्ये उक्तस्तोत्रोत्तरकालत्वादिना विहितमित्यर्थः। अत्र हेतुरुच्यते– वायव्यवाक्येत्यादिना अनुपपत्तेरित्यन्तेन। विनिगमनाविरहः।

रेवतीवाक्य एवोत्तरकालताविधिः न वायव्यवाक्य इत्यत्र विनिगमकाभावः । रेवत्याख्य एव वेति पक्षान्तरग्रहणे हेतुः । तत्पूर्वोक्तपक्षे दोष एवेति मत्वा तं दोषं दर्शयति– वारवन्तीयमग्निष्टोमसाम कार्यमित्यादिना प्राप्तत्वादित्यन्तेन । (दाक्षायणयज्ञन्यायेनेति ।) समर्थकत्विक्कर्तृकायनशब्दितावृत्तिविशिष्टयज्ञस्य स्वर्गोद्देशेन विधौ प्राप्ताप्राप्तविवेकेनावृत्तिविधिपर्यवसानवदत्रापि रेवतीविधिपर्यवसानमिति भावः । दधिन्यायेन, इन्द्रियकामाधिकरणन्यायेन । तस्यैव वा, अग्निष्टोमस्तोत्रस्यैव वा । तस्य, अग्निष्टोमस्तोत्रस्य । (आतिदेशिकऋग्बाधसंभव इति ।) स्तोत्रान्तरस्याश्रयत्वे अतिदेशतस्तस्मिन्प्राप्तानामृचां रेवतीऋग्भिरुपदिष्टाभिर्बाधो युक्तः, वायव्यवाक्येन विशिष्योपदिष्टस्य वायव्यऋगधिकरणकत्वविशिष्टाग्निष्टोमस्तोत्रस्याश्रयत्वे उपदिष्टवायव्यऋचां रेवतीभिर्बाधो वक्तव्यः, स चायुक्त इति भावः । वारवन्तीयस्य, वारवन्तीयसाम्नः । (अग्निष्टोमसामेत्यनुवादानुपपत्तेश्चेति ।) स्तोत्रस्यानपेक्षत्वे स्तोत्रसमर्पकाग्निष्टोमपदघटनानुपपत्तेरिति भावः । (गौरवभियाङ्गत्वानभिधानादिति ।) आश्रयत्वशरीरापेक्षया अङ्गत्वशरीरस्य गुरुत्वमिति भावः । तल्लाभोपपत्तावपि, आश्रयलाभोपपत्तावपि । तदयोगात्, आश्रयालाभात् । गीतिमन्त्रसाध्यस्तोत्रस्य गीतिरूपसामाश्रयत्वेऽपि रेवतीऋगाश्रयत्वं न संभवतीति साम्नो गुणत्वेत्यादेरयोगादित्यन्तस्य तात्पर्यार्थः । आश्रयविशिष्टगुणस्य विधाने आश्रयस्य गुणं प्रत्यङ्गत्वापत्तिरित्यत आह–– क्लृप्तप्रयोजनत्वादिति । आश्रयस्याग्निष्टोमस्तोत्रस्य फलान्तरार्थत्वेन क्लृप्तत्वाद्गुणेऽङ्गत्वसंबन्धेन नान्वयः किं त्वाश्रयत्वेन, अतो न गुणं प्रत्याश्रयस्याङ्गत्वमिति भावः । (धातुपारार्थ्यभयेनेति ।) तृतीयान्तैतच्छब्दस्य गुणपरत्वे तस्य धात्वर्थेनाभेदान्वयासंभवात् भेदेनान्वये च धात्वर्थं प्रति करणत्वादिरूपस्य धातुपारार्थ्यस्यावश्यकतया कारकाणां परस्परसंबन्धानुपपत्त्या धात्वर्थरूपकारकेण गुणरूपकारकस्यान्वयार्थं गुणवाचिपदस्य मत्वर्थलक्षणादिदोषप्रसङ्ग इति भावः । (तदपेक्षयेति ।) धातुपारार्थ्यदोषं सोढ्वा तृतीयान्तैतच्छब्दस्य विशिष्टसंख्यस्य रेवतीगुणपरत्वापेक्षयेत्यर्थः । एतस्य,

रेवतीवाक्योक्तकर्मान्तरस्य । (निकायित्वेनेति ।) निकायिसंज्ञाः केचन यागाः समाम्नाताः; तेषामुत्तरोत्तरस्य पूर्वपूर्वं प्रकृतिरिति ताण्डिमहाब्राह्मणव्यवस्थया अस्य निकायित्वेन पूर्वाग्निष्टुद्यागान्निकायिनो धर्मातिदेश इति भावः । तद्भेदम्, प्रयोगभेदम् । विधेयत्वेऽपीत्यस्यानन्तरमुक्तविशेषणविशिष्टकालविशिष्टयागस्येति पूरणीयम् । वाक्यभेदपरिहारार्थं कालस्य विधेयकोटिनिवेशः, न तु स्वरसत इत्याशयः ॥ १२ ॥

रेवतीवाक्ये आश्रयालाभात्फलोद्देशेन रेवतीगुणविध्यसंभवेऽपि निधनस्य सौभररूपाश्रयलाभात्फलोद्देशेन निधनगुणविधिसंभव इति प्रत्युदाहरणसंगतिः । **सौभरे पुरुषश्रुतेर्निधने कामसंयोगः** ॥ सौभरसामीये निधने काम्यमानफलसंयोगः आश्रयणीयः 'हीषिति वृष्टिकामाय निधनं कुर्यात्' इति निधनस्य पुरुषार्थत्वश्रवणादिति पूर्वपक्षसूत्रार्थः । **सर्वस्योक्तकामत्वात्तस्मिन्कामश्रुतिः स्यान्निधनार्था पुनः श्रुतिः** ॥ सर्वस्य सर्वावयवोपेतस्य सौभरसाम्नः 'यो वृष्टिकामो योऽन्नाद्यकामो यः स्वर्गकामः स सौभरेण स्तुवीत' इत्युक्तकामत्रयवत्त्वात् तस्मिन् सौभरसाम्नि कामश्रुतिः 'हीषिति वृष्टिकामाय निधनं कुर्यात्' इत्यादिवृष्टिकामादिशब्दः स्यात् 'हीषिति वृष्टिकामाय' इति पुनः श्रुतिः निधनार्था निधननियमार्थेति सिद्धान्तसूत्रार्थः । (यूपादिवदिति ।) 'खादिरं वीर्यकामस्य' इत्यत्र वीर्योद्देशेन विहितस्य खादिरत्वस्य यूपो यथा आश्रयः तथेत्यर्थः । निधनातिरिक्तभागस्य, उद्गीथप्रस्तावप्रतिहारोपद्रवाख्यभागचतुष्टयान्तर्गतभागस्य । (स्वसाधनेति ।) अत्र स्वपदं वृष्ट्यादिफलपरम् । तत्, संबन्धघटकत्वम् । (तन्नित्यप्रयोगेति ।) अत्र तत्पदं विजातीयसौभरपरम् ॥ १३ ॥

इति भाट्टकल्पतरुनामिकायां भाट्टदीपिकाव्याख्यायां द्वितीयाध्यायस्य

द्वितीयः पादः ।

## तृतीयः पादः ।

अस्य तृतीयपादस्य प्रायशः कर्मभेदापवादत्वात्पूर्वेण कर्मभेदपादेनापवाद्यापवादकभावः संगतिः । यथा 'हीषिति वृष्टिकामाय' इति वाक्ये स्वघटकपदानामन्वय उपपादितः तथा 'यदि रथन्तर—' इति वाक्ये स्वघटकयदिपदान्वयोपपादनासंभव इति प्रत्युदाहरणसंगतिः । **गुणस्तु क्रतुसंयोगात्कर्मान्तरं प्रयोजयेत्संयोगस्याशेषभूतत्वात्** ॥ 'यदि रथन्तर—' इति वाक्ये रथन्तरसामत्वगुणः स्वविशिष्टं कर्मान्तरमापादयेत् रथन्तरसामसंयोगस्य प्रकृतज्योतिष्टोमे ग्रहाग्रतां प्रति निमित्तत्वे शुक्राग्रतानिमित्तबृहत्सामसंयोगकाले ज्योतिष्टोमासंबन्धित्वात्स्यादशेषभूतत्वादिति पूर्वपक्षसूत्रार्थः । **एकस्य तु लिङ्गभेदात्प्रयोजनार्थमुच्येतैकत्वं गुणवाक्यत्वात्** ॥ तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः । एकस्य प्रकृतज्योतिष्टोमस्य लिङ्गभेदात् प्रयोगभेदात्, प्रयोगविशेषावच्छेदेनेति यावत् । तत्तदग्रताप्राप्तिरूपप्रयोजनार्थं रथन्तरस्य बृहतो वा निमित्तत्वमुच्यते 'यदि रथन्तरसामा' 'यदि बृहत्सामा' इति द्विपदबहुव्रीहौ प्रयोगविशेषावच्छिन्नज्योतिष्टोमस्यान्यपदार्थत्वे ज्योतिष्टोम एकत्वं न बाधितम्, 'यदि रथन्तर—' इत्यादिवाक्यस्य ग्रहविशेषाग्रतारूपनैमित्तिकगुणविधायित्वादिति सिद्धान्तसूत्रार्थः । **तस्य,** रथन्तरस्य बृहतश्च । **विशेषणत्वेन,** सामविशेषणत्वेन । **वृत्त्यनर्हत्वात्,** रथन्तरसामेति समासवृत्त्यनर्हत्वात् । **विशिष्टे,** रथन्तरसामविशिष्टे । **अन्ययोगव्यावृत्त्या,** सामान्तरसंबन्धशून्यत्वप्रकारकानुमितिजनकतया । **अयोगस्य** बृहद्रथन्तरायोगस्य । **उभयविशिष्टम्,** रथन्तरसामकत्वैन्द्रवायवग्रहाग्रत्वैतद्द्वयविशिष्टम् । **तदभावः,** व्यावृत्त्यभावः । (स्वावान्तरेति ।) बृहद्रथन्तरसामावान्तरकार्येत्यर्थः । **तदुपपत्तेः,** व्यावृत्त्युपपत्तेः । **अन्यथा,** अवान्तरकार्यनिरूपितविशेषस्यानङ्गीकारे । **तवापि,** पूर्वपक्षिणोऽपि । **साक्षात्,** अवा-

न्तरकार्यमद्वारीकृत्य। 'यागे' इति सप्तम्या निरूपितत्वमर्थः, तस्य तद्‌संभवादित्येतद्घटकतत्पदार्थे विशेषणत्वेनान्वयः; तथा च प्रोक्षणावघातादौ साक्षाद्यागनिरूपितकरणत्वासंभवात्प्रोक्षणावघातादेर्विशेषणत्वं न स्यादिति भावः। अन्यपदार्थसंबन्धस्य, बृहद्रथन्तरसाम्नोरन्यपदार्थक्रत्वङ्गत्वरूपसंबन्धस्य। अन्यथा, उक्तसामविशिष्टज्योतिष्टोमस्यैव निमित्तत्वे। अतः, अन्यपदार्थस्य क्रतोर्निमित्तत्वाभावात्। (लक्षणयापीति।) रथन्तरपदशक्यार्थे यदिशब्दोपात्तनिमित्तत्वान्वयस्य समासवृत्तिविरोधादिना दूषितत्वादित्यर्थः अपिना सूचितः, अतो रथन्तरे निमित्तत्वबोधासंभव इत्यत उक्तं लक्षणयेति। रथन्तरपदस्य लक्षणया निमित्तत्वविशिष्टरथन्तरमर्थः यदिशब्दो लक्षणातात्पर्यग्राहक इति भावः। तस्मान्न कर्मान्तरविधिः, तृतीयविधिप्रकाररूपगुणविधिसंभवान्न पञ्चमविधिप्रकाररूपकर्मान्तरविधिर्युक्तः। अत एव कौस्तुभे रथन्तराधिकरणे 'न हि कर्मान्तरत्ववादिनापि प्रोक्षणादिष्वयोगो व्यावर्तनीयः, अपि तु स्तोत्रादिरूपावान्तरकार्य एव। तत्र च प्रोक्षणादीनामिव बृहद्रथन्तरकार्यत्वाभावात्तेष्वयोगव्यावृत्तावपि न क्षतिः' इति ग्रन्थे प्रोक्षणावघातादीनां व्रीहियागीयत्वसूचनार्थम् 'तत्र च प्रोक्षणादीनामिव' इत्यत्र प्रोक्षणावघातादीनां प्रकृतपूर्वपक्षितकर्मापेक्षया कर्मान्तरीयत्वबोधकः 'तत्र' इति पारोक्ष्यनिर्देशः, पूर्वपक्षितप्रकृतकर्मीयत्वे 'अत्र' इति निर्देशापत्तेः। यत्तु केनचित्पण्डितंमन्येन पाण्डित्यगन्धशून्येन प्रोक्षणाद्यवच्छेदेनायोग इत्यर्थः कथितः, तत्तुच्छम्। कर्मान्तरे पूर्वपक्षिते प्रोक्षणादिसंबन्धाभावात् अवच्छेद्याधिकरणसंबन्धस्यैवावच्छेदकत्वात्। शंभुभट्टीये 'कर्मान्तरत्ववादिनोऽपि रथन्तरसामत्वायोगस्य प्रोक्षणादौ सर्वदा विद्यमानस्य व्यावृत्त्यसिद्धेर्विशेषणत्वानुपपत्तिस्तुल्येत्यर्थः' इति ग्रन्थे 'सर्वदा विद्यमानस्य' इति विशेषणमयोगस्य प्रोक्षणादीनां प्रकृतयागासंबन्धित्वं व्रीहियागीयत्वं च सूचयति, अन्यथा तद्विशेषणवैयर्थ्यापत्तेरिति। तस्मादस्मदुक्तव्याख्यानमेव समीचीनमित्यलम् ॥ १ ॥

'यदि रथन्तर—' इति यदिशब्दघटितवाक्ये विचारिते यदिशब्द-

घटित— 'यदि ब्राह्मणः'— इत्यादिवाक्यस्याप्युपस्थितत्वात्प्रसङ्गसंगतिः । **अवेष्टौ यज्ञसंयोगात्क्रतुप्रधानमुच्यते** ॥ अवेष्टिवाक्ये ब्राह्मणादि-पदं यतः क्रतुप्रधानमुच्यते, क्रतुः अवेष्टियागप्रयोगः प्रधानं ब्राह्मणादिगुणापेक्षया अङ्गी यस्य ब्राह्मणादिपदस्य तत्, ततः ब्राह्मणादिरूपकर्तृगुणात्मयोगान्वयिनः अवेष्टियागस्य भिन्नः प्रयोगः विधीयते, न तु ब्राह्मणस्य निमित्तत्वमङ्गीकृत्य प्रयोगभेदं विनैव बार्हस्पत्यचरोर्मध्ये विधानादिरूपनैमित्तिकं विधीयत इति; कुतः? क्षत्रियस्यैव राजसूययज्ञसंयोगात् राजसूयान्तर्गतावेष्टौ ब्राह्मणस्य कर्तृत्वेन प्राप्त्यभावेन निमित्तत्वासंभवात् तत्राप्राप्तस्य ब्राह्मणस्य विध्यावश्यिकतया तत्कर्तृकावेष्टिप्रयोगविधिरुक्तवाक्यात्सिध्यतीति यावदिति सूत्रार्थः । हुत्वा, कृत्वा । द्रविडप्रसिद्धेः, अविदितयाज्ञिकसंप्रदायो द्रविडः तत्प्रसिद्धेः । म्लेच्छप्रसिद्धित्वेन, अयाज्ञिकप्रसिद्धित्वेन ॥ २ ॥

पूर्वाधिकरणे अवेष्टौ ब्राह्मणादीनां प्राप्त्यभावान्निमित्तत्वासंभव उक्तः, आधाने तेषां प्राप्तत्वान्निमित्तत्वं भवत्विति प्रत्युदाहरणसंगतिः । **आधानेऽसर्वशेषत्वात्** ॥ आधाने आधानरूपविषये 'वसन्ते ब्राह्मणोऽग्नीनादधीत' इति वाक्यं प्रमापकम्; कुतः? असर्वशेषत्वात् आधानस्य सर्वक्रतुं प्रति शेषत्वाभावात्, आधानस्य स्वविधिप्रयुक्तत्वेन क्रतुविध्यप्रयोज्यत्वादिति यावदिति सूत्रार्थः । अनन्याक्षिप्तशक्तिकेन, अग्निविद्ययोरन्तरेण यथा क्रतुविध्याक्षिप्तशक्तिकत्वं तद्वदन्यविध्याक्षिप्तशक्तिकत्वरहितो योऽर्थः आधानत्वेनाधानादिः तद्बोधकेन । एतस्य, 'य एवं विद्वानग्निमाधत्ते' इति वाक्यस्य । वर्तमानापदेशता, लडन्तता । प्राप्ताधानानुवादेन, 'संभारेषु—' इति वाक्यप्राप्ताधानानुवादेन । कालविधिः, जातपुत्रवाक्ये जातपुत्रादिपदलक्षितवयोवस्थारूपकालविधिः । वाक्यभेदापत्तेः, जातपुत्रवाक्ये उक्तद्वयविधाने वाक्यभेदापत्तेः । उक्तवाक्ये, 'संभारेषु—' इति वाक्ये । (एवं चेति ।) जातपुत्रवाक्यस्य जातपुत्रत्वकृष्णकेशत्वाद्यनेकगुणविशिष्टाधानविधायकत्वेत्यर्थः । (नापद्येतेति ।) वाक्यान्तरविहिताधानानुवादेन जातपुत्रत्वकृष्णकेशत्वाद्यनेकविधौ

वाक्यभेदापत्त्या या प्रसक्ता पदद्वयस्य वयोवस्थायां लक्षणा सा न वक्तव्ये-त्यर्थः । पक्षेऽसंभवत्प्राप्तिकत्वेन, अध्ययनकामनायां तदर्थमुपनयनस्य प्राप्तत्वेऽप्युक्तकामनाभावे उपनयनस्यासंभवत्प्राप्तिकत्वेन । विध्युपपत्तिः, उक्तकामनायां सत्यामसत्यामप्युपनयनावश्यिकत्वायोपनयनविध्युपपत्तिः । द्रव्यदेवतयोरुत्पत्त्यन्वयिनोः कर्मोत्पत्तिभेदकत्वं न तूत्पत्त्यन्वयिनोऽप्यन्यस्य अनाधातुराहवनीयत्वाभावादेः, वसन्तवाक्य इव ग्रीष्मशरद्वाक्ययोरप्याधानोत्पत्त्यापत्तेः; प्रयोगान्वयिगुणासिद्धप्रयोगविध्याक्षिप्तोत्पत्तिस्तु त्रिषु स्यादित्यत आह— प्राथम्याच्चेति । वसन्तवाक्यस्येति शेषः । (इतरयोरित्विति ।) राजन्यवैश्यवाक्ययोस्तु राजन्यादिप्रयोगान्वयिगुणात्प्रयोगमात्रस्य विधानम् आधानोत्पत्तेर्ब्राह्मणवाक्यप्राप्तत्वादिति भाव. ॥ ३ ॥

वसन्तादिवाक्ये आधानमिवात्रापि कर्मान्तरं विधेयं स्यात् हेतोरत्रापि सत्त्वादिति दृष्टान्तसंगति. । **अयनेषु चोदनान्तरं संज्ञोपबन्धात् ॥** अयनेषु दाक्षायणादिवाक्येषु चोदनान्तरम् (चोद्यत इति चोदना कर्म) कर्मान्तरं विधेयम्, 'दाक्षायणयज्ञ.' इति विलक्षणसंज्ञोपबन्धादिति पूर्वपक्षसूत्रार्थः । **विकारो वा प्रकरणात्** ॥ वाशब्दः पक्षान्तरपरिग्रहार्थः । दर्शपूर्णमासकर्मणोर्यदावृत्तिविशिष्टं रूपं विकारात्मकं स एव दाक्षायणयज्ञः; कुतः? दर्शपूर्णमासप्रकरणादिति सिद्धान्तसूत्रार्थः । **गुणात्संज्ञोपबन्धः ॥** आवृत्तिगुणनिमित्त संज्ञासंबन्ध इति सूत्रार्थ. । फलसंबन्धस्यापि, दर्शपूर्णमासकर्मणोः फललक्षणपशुसंबन्धस्यापि । सार्वकाम्यवाक्यवशात्, 'सर्वेभ्यो दर्शपूर्णमासौ' इति वाक्यबलात् । (अन्यपरत्वाभावादिति ।) दाक्षायणवाक्यस्य दर्शपूर्णमासकर्मणोः पशुफलसाधनत्वपरत्वाभावादित्यर्थः । यस्य, दर्शपूर्णमाससंज्ञकेष्टिकर्मणः । यत्र, सांनाय्ययागे । कुम्भीभ्याम्, सांनाय्यदधिपयोभ्याम् । अनेनैव वचनेन, 'सह कुम्भीभिरभिक्रामेत्' इति वचनेन । तस्य, अभिक्रामस्य । (आश्रयत्वसिद्धिरिति ।) अभिक्रमणमाश्रित्य पशुफलोद्देशेन सहत्वगुणः 'साकंप्रस्थायीयेन यजेत' इति वाक्येन विधीयत इति भावः ॥ ४ ॥

पूर्ववदाश्रयलाभात्स्यात्फलार्थगुणविधिरिति दृष्टान्तसंगतिः। **संस्कारस्याप्रकरणेऽकर्मशब्दत्वात् ॥** अप्रकरणे अप्रकृते अनारभ्याधीते 'वायव्यं श्वेतम्—' इत्यादिवाक्ये 'ईषामालभेत' इत्युक्तो दार्शपूर्णमासिकः स्पर्शाख्यालम्भनसंस्कारोऽनूद्यते, अकर्मशब्दत्वात् विधेयकर्मवाचकयजत्यादिशब्दशून्यत्वादिति पूर्वपक्षसूत्रार्थः। **यजतिस्तु द्रव्यफलभोक्तृसंयोगादेतेषां कर्मसंबन्धित्वात् ॥** तुः पूर्वपक्षव्यावृत्त्यर्थः। वायव्यवाक्ये यजतिः आलभतिलक्षितयागः विधीयते द्रव्यस्य फलभोक्तृशब्दितदेवतायाश्च तद्धितेन बोधितात्संयोगात् एतेषां द्रव्यदेवतासंयोगानां कर्मसंबन्धित्वात् यागसंबन्धित्वादिति सिद्धान्तसूत्रार्थः। (चरुशब्दलक्षितस्थाल्यामिति।) यद्यपि 'चरुः स्थाल्यां हविष्यपि' इति कोशवशाच्चरुशब्दस्य स्थाल्या शक्तिरस्तीति प्रतीयते, तथापि 'चरुर्हविर्विकारः स्यात्' इति चरुशब्दस्य हविष्येव शक्तिसमर्थनात्स्थाल्या लक्षितत्वमुक्तमिति भावः। (सार्वकाम्यवाक्येति।) 'सर्वेभ्यो दर्शपूर्णमासौ' इति वाक्येत्यर्थः। अतिदेशतः प्राप्तौ, दर्शपूर्णमासतोऽतिदेशतः प्राप्तौ ॥ ९ ॥

'—श्वेतमालभेत' इत्यालभतिविचारे कृते 'वत्समालभेत' इत्यालभत्यन्तरस्योपस्थितत्वात्प्रसङ्गसंगतिः। **विशये प्रायदर्शनात् ॥** 'आलम्भः स्पर्शहिंसयोः' इति कोशवशेन 'वत्समालभेत' इत्यत्र कोऽर्थो ग्राह्य इति विशये संशये सति स्पर्शार्थ एव ग्राह्यः प्रायशोऽस्य स्पर्शार्थे आलभतेः प्रयोगप्राचुर्यस्य दर्शनादिति सूत्रार्थः। स्पर्शमात्रत्वात्, स्पर्श एव शक्तत्वात् ॥ ६ ॥

पूर्वाधिकरणे देवताश्रवणाभावान्न यागकल्पनमित्युक्तम्, अत्र तत्सत्त्वाद्यागकल्पनं स्यादिति प्रत्युदाहरणसंगतिः। **संयुक्तस्त्वर्थशब्देन तदर्थः श्रुतिसंयोगात् ॥** चरुशब्दः अर्थशब्देन उपधानार्थकशब्देन संयुक्तः न तु यागेन, अतः तदर्थ एव उपधानार्थ एव चरुः स्वीकर्तव्यः; 'चरुमुपदधाति' इति श्रुतौ चरूपधानयोः क्रियाकर्मभावेन संयोगादिति सूत्रार्थः। (प्रतिपत्तिप्राप्ताविति।) चरोरिति शेषः। (चर्वपेक्षितप्रकृतिद्रव्यस्येति।)

अपेक्षितत्वाद्देवेति शेषः ॥ ७ ॥

पूर्वाधिकरणे विधिवाक्ये देवतावाचितद्धिताश्रवणेऽपि इह तच्छ्रवणात्कर्मान्तरविधानं स्यादिति प्रत्युदाहरणसंगतिः । **पात्नीवते तु पूर्वत्वादपच्छेदः ॥** पात्नीवतवाक्ये पूर्वत्वात् प्रत्यभिज्ञायमानपूर्वकर्मवत्त्वात् पर्यग्निकरणान्ताङ्गरीतिविधानेन इतराङ्गाणामपच्छेद इति सूत्रार्थः । 'आग्नेयं चतुर्धा करोति' इतिवत्, 'आग्नेयं चतुर्धा करोति' इति वाक्ये आग्नेयपदेनाग्नीषोमीयपुरोडाशस्याग्नेयत्वेऽप्युभयदैवत्यत्वादनुवादासंभववत् । अग्निशब्दवत्, लक्षणया इन्द्राग्न्योरग्निशब्देनाभिधानवत् । देवताद्वयमेव, व्यासज्यवृत्तित्वशून्यदेवतात्वद्वयविशिष्टदेवताद्वयमेव । एकवाक्योपादानाच्च, त्वष्टृपत्नीवद्देवतयोरेकवाक्यबोधितत्वाच्च । वृत्तम्, वर्तमानध्वंसप्रतियोगिकृतिविषयताविशिष्टम् । गृहमेधीयाज्यभागन्यायेन, गृहमेधीययागे विकृतावतिदेशात्पूर्वं प्राकृताज्यभागविधायकस्य प्रकृतौ क्लृप्तोपकाराज्यभागाम्नानस्य आज्यभागव्यतिरिक्तप्राकृताङ्गविषयेऽतिदेशप्रतिबन्धकत्वमिति न्यायेन । (अतिदेशाप्रतिबन्धकत्वमिति ।) अतिदेशस्यैव प्रमाणान्तरत्वादिति भावः । (एतद्विधीति ।) 'प्रोक्षिताभ्याम्—' इति विधीत्यर्थः ॥ ८ ॥

पूर्वाधिकरणे प्रत्यभिज्ञानान्न कर्मान्तरमित्युक्तम्, अत्र प्रत्यभिज्ञानाभावात्कर्मान्तरं स्यादिति प्रत्युदाहरणसंगतिः । **अद्रव्यत्वात्तु केवले कर्मशेषः स्यात् ॥** अद्रव्यत्वात् द्रव्यस्य तदुपलक्षितदेवतायाश्चालाभात् केवले गृहीतौ कर्मशेषः ज्योतिष्टोमकर्माङ्गद्रव्यसंस्कारः विधीयत इति सूत्रार्थः । एष ह वै इति शेषः अदाभ्यग्रहवान्पुरुषः हविषा सोमेन हविः सोमं यजत इत्याद्यर्थवादार्थः । इदम्, वाक्यम् । निर्यासद्रव्यस्य, किंचिदभिषवेण निर्गतरससोमद्रव्यस्य । गुणसंक्रान्तशक्तिना, ग्रहणगुणस्यापूर्वतया विधानयोग्यग्रहणकेन । अनेकगुणविशिष्टयागविधाने गौरवाद्गुणविधानं युक्तमिति भावः । संस्कारस्य नामधेयेन न संबन्ध इत्यत आह— उक्तसंज्ञकेति । (उपयामेति ।) तव समीपे वयं याम गच्छाम त्वं प्रजापतये देवतायै गृहीतोऽसि तस्मात् प्रजा-

पतिना जुष्टं संबद्धं त्वा त्वाम् अहं गृह्णामि इति मन्त्रार्थः । तदुपपाद्यस्य, अङ्गत्वोपपाद्यस्य अङ्गजन्योपकारस्य ॥ ९ ॥

गृह्णातौ यागलक्षणायां प्रमाणाभावान्न यागविधिरित्युक्तम्, अत्र चिनोतौ यागलक्षणाया प्रमाणसत्त्वाद्यागविधिः स्यादिति प्रत्युदाहरणसंगतिः । **अग्निस्तु लिङ्गदर्शनात्क्रतुशब्दः प्रतीयेत** ॥ 'य एवं विद्वानग्निं चिनुते' इति वाक्ये अग्निः क्रतुबोधकशब्दः प्रतीयेत, 'अग्नेः स्तोत्रम्' 'अग्नेः शस्त्रम्' 'षडुपसदोऽग्नेश्चित्यस्य भवन्ति' इति लिङ्गात् स्तोत्रं शस्त्रमुपसदश्चेत्येतत्सर्वं यागसंबन्धि नान्यस्येति पूर्वपक्षसूत्रार्थः । **द्रव्यं वा स्याच्चोदनायास्तदर्थत्वात्** ॥ वाशब्दः पूर्वपक्षं व्यावर्तयति । अग्निशब्दाभिधेयं ज्वलनद्रव्यं स्यात् न यागः, चोद्यत इति चोदना तस्याश्चयनाख्यायाः द्वितीययाग्निसंस्कारकत्वरूपाग्न्यर्थत्वावगमादिति सिद्धान्तसूत्रार्थः । **तत्संयोगात्क्रतुस्तदाख्यः स्यात्तेन धर्मविधानानि** ॥ उक्तलिङ्गयुक्तवाक्येषु लिङ्गसंयोगात् तद्वाक्यस्थाग्निः क्रतुः स्यात्, न तु लिङ्गायुक्तवाक्यस्थाग्निशब्दोऽपि क्रतुपरः; तेन लिङ्गयुक्तवाक्येन विहिता धर्मास्तत्रैवाग्निशब्दस्य क्रतुपरत्वे नियामका भवन्तीति सूत्रार्थः । तस्मिन्नेव, 'अथातोऽग्निमग्निष्टोमेन—' इत्येतस्मिन्नेव । विद्वद्वाक्य एव, 'य एवं विद्वानग्निं चिनुते' इति वाक्य एव । अव्यक्तत्वात्, स्वाङ्गतयानभिहितदेवताकत्वात् । तस्य, अग्निसंज्ञकयागस्य । तत्र हि, 'अथातः—' इति वाक्ये हि । जातिन्यायेन, आकृत्यधिकरणसिद्धजातिशक्तिन्यायेन । व्यक्तिन्यायेन, संस्थाधिकरणोक्तव्यक्तिनिरूढलक्षणायुक्त्या । ज्योतिष्टोमसंवलितत्वात्, ज्योतिष्टोमाङ्गसंवलितत्वस्वरूपात् । अनुष्ठानसादेश्यात्, क्रमप्रमाणात् । क्रत्वङ्गत्वप्रतिप्रसवार्थम्, काम्यमानफलार्थत्वेन क्रत्वङ्गत्वनिवृत्तौ प्रसक्तायां तन्निवृत्त्यर्थम् । तत्, अङ्गत्वम् । (समुच्चय इति ।) चयनस्येति शेषः ॥ १० ॥

यथा पूर्वाधिकरणे अग्निशब्दमुख्यार्थानुरोधेन चिनोतेश्चयनविधायकत्वं तथाग्निहोत्रपदमुख्यार्थानुसारेण 'मासमग्निहोत्रं जुहोति' इति वाक्ये मासपदेन

मासविधिः स्यादिति दृष्टान्तसंगतिः । **प्रकरणान्तरे प्रयोजनान्यत्वम् ॥** अनुपादेयगुणयुक्तानुपस्थितिरूपप्रकरणान्तरे सति, प्रयुज्यते फलमनेनेति प्रयोजनं धात्वर्थः, तस्य मासाग्निहोत्रवाक्यस्थ-'जुहोति'-कथितस्य नैयमिकाग्निहोत्रादन्यत्वमिति सूत्रार्थः । ('यदाहवनीये जुहोति' इतिवदिति ।) उक्तवाक्येनानारभ्याधीतेन दूरस्थहोमानुवादेनाहवनीयगुणविधिवदित्यर्थः । अनुपादेयस्य, कृतिविषयत्वायोग्यस्य । दूरस्थकर्मानुवादेन, दूरस्थनैयमिकाग्निहोत्रकर्मानुवादेन । (कर्तृबहुत्वेति ।) 'जुह्वति' इति बहुवचनतिङुक्तकर्तृबहुत्वेत्यर्थः । प्रमेयम्, तात्पर्यगोचरः । धात्वर्थभावना, धात्वर्थावच्छिन्नत्वविशिष्टभावना । उत्सर्गः, असति बाधके नियतिः । (योग्येति ।) उपादेयत्वविधेयत्वयोग्येत्यर्थः । (तन्मात्रेति ।) योग्योपपदमात्रेत्यर्थः । अत एव, योग्योपपदार्थत्वादेव । (धात्वर्थानुवादेति ।) धात्वर्थरूपानुवादेत्यर्थः । अतः, उपादेयत्वस्य धात्वर्थवृत्तित्वात् । तत्सामानाधिकरण्येन, उपादेयत्वसामानाधिकरण्येन । विहितस्य, नैयमिकविधिना विहितस्य । भेदः, नैयमिकाग्निहोत्राद्भेदः । उपनीता, जाता । स्वाविषयविषयत्वम्, स्वस्या विजातीयोपस्थितेर्यो विषयः विजातीयहोमः, तद्विषयत्वं तद्विषयकोपस्थितिजनकत्वम् । (तद्गतेति ।) 'सायं जुहोति' इत्येतद्वाक्यस्य जुहोतिपदगतं यद्विधेयार्थकत्वं तत्प्रतिबन्धकेत्यर्थः । अन्यथा, नाम्नो विजातीयहोमोपस्थापकत्वे । (पर्यायत्वेनेति ।) अग्निहोत्रपदहुधात्वोः इति शेषः । अग्निदेवताकहोमान्तरेऽग्निहोत्रप्रयोगवारणायाग्निहोत्रपदस्य योगरूढ्यावश्यिकतया न पर्यायत्वं केवलरूढजुहोतिनेत्यत आह— अतिप्रसङ्गेत्यादि अनङ्गीकाराच्चेत्यन्तम् । (अत एव यत्रेति ।) ग्रन्थगत-अत एव-इत्यस्य नाम्नो विजातीयहोमयागबोधकत्वादेवेत्यर्थः । तद्वाक्यस्य, 'सर्वेभ्यो ज्योतिष्टोमः' इति वाक्यस्य । सः, व्यापारः । (अत एव प्राचीनेति ।) ग्रन्थगत-'अत एव'-इत्यस्य अनुपादेयगुणानां स्वात्मन्युपादेयत्वापनयद्वारा धात्वर्थे उपादेयत्वापादनादेवेत्यर्थः । इदम्, मासाग्निहोत्रवाक्यम् । एवमित्यादेः कपाल इतीत्यस्यानन्तरमुदाहरणमिति पूरणीयम् । निमित्तस्येत्यादेः यजेतेनीत्यस्यानन्तरम् उदाहरणमिति

पूरणीयम् । अयम्, नैमित्तिकविश्वजिद्यागः । ('विश्वजिता यजेत' इत्यस्मा- त्कर्मान्तरमिति ।) सत्रप्रकरणपठित-'विश्वजिता यजेत'-इतिवाक्यविहितकर्म- सकाशाद्भिन्न इत्यर्थः । अनेनेत्यस्य विनियुक्तस्येत्यत्रैव प्रयुक्तस्येत्यत्राप्यन्वयः । अनेन, उक्तनैमित्तिकविश्वजिद्वाक्येन । विनियुक्तस्य, 'सत्रं करिष्ये' इति संकल्पं कृत्वा तदकरणे यत्पापं जायते तन्निवृत्तिरूपफलं प्रति साधनत्व- रूपविनियोगवत्तया कथितस्य विश्वजिद्यागस्य । प्रयुक्तस्य, उक्तफलार्थं विहित- प्रयोगकस्य विश्वजिद्यागस्य । तेन, अनैमित्तिकविश्वजिद्वाक्येन । तथा च नैमित्तिकविश्वजिद्वाक्यं न कर्मान्तरविधायकं किं त्वनैमित्तिकविश्वजिद्वाक्य- विहितकर्मणो विनियोगप्रयोगयोर्विधायकमिति न चेति शङ्काग्रन्थाभिप्रायः । संनिधिं विना, 'सायं जुहोति' इत्यत्रैव संनिधिरूपबाधकं विना ॥ ११ ॥

देशकालनिमित्तरूपानुपादेयगुणवशेन कर्मभेदे निरूपिते, प्रसङ्गात्फल- संस्कार्यस्वरूपानुपादेयगुणवशेन कर्मभेदो निरूप्यत इति प्रसङ्गसंगतिः । **फलं चाकर्मसंनिधौ** ॥ अकर्मसंनिधौ प्रकरणान्तरे विद्यमानं फलं संस्कार्यं च कर्मभेदकमिति सूत्रार्थः । रुक्काम इतीत्यनन्तरमुदाहरणमिति पूरणीयम् । रुक्कामस्तेजस्कामः । प्रोक्षतीतीत्यनन्तरमुदाहरणमिति पूरणीयम् । पञ्चैव कालदेशनिमित्तफलसंस्कार्याणि पञ्चैवानुपादेयानि ॥ १२ ॥

पूर्वाधिकरणेऽनुपादेयगुणस्य कर्मभेदकत्वोक्त्या अत्रापि तद्गुणवशेन कर्म- भेदः स्यादिति दृष्टान्तसंगतिः । **संनिधौ त्वविभागात्फलार्थत्वेन पुनः श्रुतिः** ॥ संनिधौ अग्निहोत्रादिकर्मसंनिधौ, अग्निहोत्रप्रकरण इति यावत् । अनुपादेयगुणयोगेऽपि अविभागात् विजातीयप्राकरणिककर्मोपस्थितेर- विच्छेदात् 'सायं जुहोति' इत्यादिसंनिधिपठितवाक्ये कर्मान्तरं न, किं तु फलार्थत्वेन कालदेशनिमित्तफलसंस्कार्यसंबन्धार्थं फलशब्दः उक्तपञ्चानुपादेय- गुणोपलक्षकः तस्य कर्मणः पुनः श्रुतिरिति सूत्रार्थः । समे, समदेशे । याव- ज्जीवमिति निमित्तकथनम् । संनिधानात्, विजातीयकर्मोपस्थितेः । स्वविषयः, विजातीयकर्मोपस्थितिविषयः । 'य इष्ट्वा-'इत्यादौ, 'य इष्ट्या पशुना सो-

'वा यजेत सोऽमावास्यायां पौर्णमास्यां वा यजेत' इति वाक्ये ॥ १३ ॥

प्राप्तकर्मविषयकप्रकरणपठितवाक्ये कालाद्यनुपादेयगुणस्यान्यतोऽप्राप्त्या विधिरुक्तः, इहामावास्यारूपानुपादेयगुणस्यापि कालद्वययुक्तवाक्यादेव प्राप्ततया अप्राप्त्यभावात् 'यदाग्नेयोऽष्टाकपालोऽमावास्यायाम्—' इति प्रकरणपठितवाक्येऽपि कर्मान्तरविधिः स्यादिति प्रत्युदाहरणसंगतिः । **आग्नेयस्तूक्तहेतुत्वादभ्यासेन प्रतीयेत** ॥ अस्मिन्वाक्ये आग्नेययागः कालद्वयवाक्यविहितकर्मणो विलक्षणः विहित इति प्रतीयेत अभ्यासाभिन्नपूर्वोक्तहेतुकत्वात्; अभ्यासेनेति तृतीया अभेदार्थे; हेतुत्वशब्दो हेतुकत्वपरः, इति पूर्वपक्षसूत्रार्थः । **अविभागात्तु कर्मणो द्विरुक्तेर्न विधीयते** ॥ एतद्वाक्यकथितकर्मणः कालद्वययुक्तवाक्यविहितामावास्याकालकर्तव्याग्नेयपुरोडाशकर्मणा अविभागात् अभेदात् पुनरुक्तिरूपद्विरुक्तिमात्रेण यागो न विधीयत इति सिद्धान्तसूत्रार्थः । **अन्यार्था वा पुनः श्रुतिः** ॥ अमावास्यायां कर्तव्याग्नेययागस्य स्तुत्यर्था पुनः श्रुतिरिति सूत्रार्थः । अनुपादेयगुणसत्त्वेऽपि अनुपस्थितिरूपविशेष्यांशाभावात्कथं प्रकरणान्तरमित्यरुच्या हेत्वन्तरमाह— अभ्यासाद्वेति ॥ १४ ॥

इति भाट्टकल्पतर्वभिधाया भाट्टदीपिकाव्याख्याया द्वितीयाध्यायस्य

**तृतीयः पादः ।**

**चतुर्थः पादः ।**

अस्य प्रयोगभेदपादस्य भिद्यमानकर्मोपजीव्यत्वात्पूर्वपादेनोपजीव्योपजीवकभावः संगतिः । कालयुक्तवाक्यस्य पूर्वाधिकरणे विचारितत्वेनास्य कालयुक्तवाक्यविचारस्य पूर्वेण प्रसङ्गसंगतिः । **यावज्जीवकोऽभ्यासः कर्मधर्मः प्रकरणात्** ॥ 'यावज्जीवं जुहोति' इति वाक्ये होममनूद्य यावज्जीवपदेनाभ्यासः कर्मधर्मतया विधीयते अग्निहोत्रप्रकरणादिति पूर्वपक्षसूत्रार्थः । **कर्तुर्वा**

**श्रुतिसंयोगात्** ॥ कर्तृसंबन्धिजीवनपर्याप्तकालो होमं प्रति निमित्तत्वेन विधीयते श्रुतिसंयोगात् यावज्जीवपदस्य कालार्थे रूढिसंयोगात् अभ्यासे लक्षणापत्तेश्चेति सिद्धान्तसूत्रार्थः । अत एव, व्याप्यव्यापकभावापन्नकालत्वादेव । यावच्छब्दार्थस्य, व्यापकत्वस्य । इदम्, वाक्यम् ॥ १ ॥

निमित्तभेदान्नैमित्तिकावृत्तिनिरूपणे प्रतिशाखं वाक्यभेदरूपनिमित्तभेदाद्वाक्यबोध्यकर्मभेदः स्यादिति दृष्टान्तसंगतिः । **नामरूपधर्मविशेषपुनरुक्तिनिन्दाशक्तिसमाप्तिवचनप्रायश्चित्तान्यार्थदर्शनाच्छाखान्तरेषु कर्मभेदः स्यात्** ॥ 'काठकम्' 'कालापम्' इत्यादिनामभेदात्, 'अग्नीषोमीयमेकादशकपालम्' 'अग्नीषोमीयं द्वादशकपालम्' इति शाखाभेदेन रूपस्य एकादशकपालद्वादशकपालरूपस्य भेदात्, कारीर्यध्ययने शाखाभेदेन भूमिभोजनतदभावरूपधर्मविशेषात्, शाखाभेदेन 'अग्निहोत्रं जुहोति' 'अग्निहोत्रं जुहोति' इति पुनरुक्तेः, 'प्रातः प्रातरनृतं ते वदन्ति पुरोदयाज्जुह्वति येऽग्निहोत्रम्' इत्यनुदितहोमनिन्दायाः, 'यथातिथये प्रद्रुतायान्नमाहरेयुस्तादृक्तद्यदुदिते जुहोति' इत्युदितहोमनिन्दायाः, सर्वशाखोक्तरीत्या अग्निहोत्रकर्मकरणाशक्तेः, अत्राग्निः समाप्तः अत्राग्निरसमाप्त (?) इति शाखाभेदेन समाप्तिवचनात्, उदितानुदितहोमातिक्रमे शाखाभेदेन प्रायश्चित्ताम्नानात्, सारस्वते ये पुरोडाशिनस्ते उपविशन्ति ये सांनायिनस्ते वत्सान्वारयन्ति, पुरोडाशिन इष्टप्रथमयज्ञाः सांनायिनोऽनिष्टप्रथमयज्ञा अधिकारिण इति भिन्नभिन्नार्थदर्शनरूपान्यार्थदर्शनात्, शाखान्तरेषु कर्मभेदः स्यात्, एकस्मिन्कर्मण्यग्निहोत्रादौ उक्तहेतूनामसंभवादिति पूर्वपक्षसूत्रार्थः । **एकं वा संयोगरूपचोदनाख्याविशेषात्** ॥ शाखाभेदेऽपि एकमेवाग्निहोत्रं फलसंयोगस्य द्रव्यदेवताख्यरूपस्य पुरुषप्रयत्नरूपचोद्यमानस्य अग्निहोत्रमिति नामधेयस्य चाविशेषादिति सिद्धान्तसूत्रार्थः । **न नाम्ना स्यादचोदनाभिधायित्वात्** ॥ काठकादिनाम्ना कर्मभेदो न स्यात् काठकादिनाम्नां ग्रन्थनामत्वेन चोद्यमानकर्माभिधानत्वाभावादिति सूत्रार्थः । **एकत्वेऽपि परम्** ॥ कर्मण

एकत्वेऽपि रूपभेद उपपद्यते यतः परम् एकत्वप्रत्यभिज्ञापनपरं वचनमस्तीति सूत्रार्थः । **विद्यायां धर्मशास्त्रम्** ॥ भूमिभोजनादिधर्मशासनं वेदग्रहणरूपविद्यायां न तु कर्मणीति सूत्रार्थः । **वाक्यासमवायात्** ॥ तत्तच्छाखीयवाक्यद्वयस्याध्येतृभेदेनैकस्मिन्समवायरूपसंबन्धाभावात्पुनरुक्तिर्नास्तीति सूत्रार्थः । इदं सूत्रं शास्त्रान्तराध्ययनप्रतिषेधकम् । **अर्थासंनिधेश्च** ॥ एकस्यां शाखायां यदग्निहोत्रं तस्य शाखान्तरे उपस्थितिरूपसंनिधानाभावात्तदनुवादेन गुणविध्यसंभवेन तदेव शाखान्तरेऽप्यग्निहोत्रं पुरुषान्तरं प्रत्युत्पद्यते इति सूत्रार्थः । इदमपि सूत्रं शाखान्तराध्ययनं न कार्यमित्यस्य सूचकम्, एकस्य बहुशाखाध्ययनसंभवे अग्निहोत्रस्य शाखान्तरेऽप्युपस्थितिसंभवादसंनिध्युक्त्यसंगत्यापत्तेः । **समाप्तिवच्च संप्रेक्षा** ॥ 'अस्माकमग्निः समाप्यते' इति वचनं समाप्तिवत् समाप्तितया संप्रेक्षारूपम्, न तु अस्माकमत्र समाप्तिरन्येषामन्यत्रेति सूत्रार्थः । **एकत्वेऽपि पराणि निन्दाशक्तिसमाप्तिवचनानि** ॥ अग्निहोत्रस्य कर्मणः सर्वशाखासु एकत्वेऽपि निन्दादिवचनानि पराणि परार्थानि । न हि निन्दा निन्दितुं प्रवृत्ता, अपि तु तदितरत्स्तुत्वा इतरविधिपरा । अशक्तिः अशक्तस्य यत्किंचिदङ्गानुष्ठानेनापि प्रधानानुष्ठानफलसिद्धिपरा । समाप्तिरेकाङ्गसमाप्तिपरा न तु कृत्स्नसमाप्तिपरा, इति सूत्रार्थः । **प्रक्रमाद्वा नियोगेन** ॥ 'उदितहोमं करिष्ये' इति संकल्प्य येन कर्म प्रक्रान्तं तस्य प्रक्रमातिक्रमदोषनिर्हरणार्थं शास्त्ररूपनियोगेन प्रायश्चित्तमुक्तम्, नैतावता कर्मभेदः एकस्य कर्मण उदितानुदितकालद्वयसंभवादिति सूत्रार्थः । **सारस्वतेऽपि प्रतिषेधाद्यदेति स्यात्** ॥ सारस्वते इष्टप्रथमयज्ञानामनिष्टप्रथमयज्ञानां च कर्तृत्वदर्शनात्सारस्वतकर्मभेद इत्युक्तमयुक्तं ज्योतिष्टोमाख्यप्रथमयज्ञशून्यस्यान्ययज्ञप्रतिषेधात् सारस्वतेऽप्यनिष्टप्रथमयज्ञस्य कर्तृत्वप्रतिषेधसिद्धेः; अतो यदा सांनायिनः अनिष्टप्रथमयज्ञा जनाः पुरोडाशिनः इष्टप्रथमयज्ञा भवेयुः तदा इष्टप्रथमयज्ञत्वविशिष्टा जाता इति श्रुतियोजना स्यादिति सूत्रार्थः । ('अध्वर्युं वृणीते' इतिवदिति ।) अध्वर्योरुद्देश्यत्वेन **उद्दे-**

स्यगतैकत्वस्य तस्यामवस्थायामविवक्षितत्वेऽपि वरणसंस्कारविध्यन्यथानुपपत्त्या कल्पिते अध्वर्युणा वृतेन कर्म कर्तव्यमिति संस्कृताध्वर्योर्विनियोगविधावध्वर्योरुपादेयत्वात्संस्कारविधौ श्रुतैकत्वस्योपादेयत्वावस्थायां तस्मिन्नन्वयसंभव इति एकत्वविवक्षावदिति भावः ॥ २ ॥

इति भाट्टकल्पतर्वभिधायां भाट्टदीपिकाव्याख्यायां द्वितीयाध्यायस्य
चतुर्थः पादः ।

## तृतीयोऽध्यायः ।

कर्मगताङ्गत्वविचाररूपस्य तृतीयाध्यायस्य कर्मभेदविचाररूपद्वितीयाध्यायोपजीव्यत्वात्तयोरुपजीव्योपजीवकभावः संगतिः । अस्याङ्गत्वश्रुतिपादस्य तृतीयाद्यस्य द्वितीयचतुर्थप्रयोगभेदपादस्य च विषयविषयिभावः संगतिः । श्रुतिप्रमाणकाङ्गत्वविशिष्टकर्मविषयकत्वात्कर्मप्रयोगभेदस्य एकस्मिन्नेव कर्मणि शाखाभेदेनोक्तानामङ्गानामुपसंहारस्य पूर्वाधिकरणोक्तत्वेनाङ्गत्वस्योपस्थितत्वात्तद्विचारप्रतिज्ञारूपस्यास्याधिकरणस्य पूर्वाधिकरणेन प्रसङ्गसंगतिः । **अथातः शेषलक्षणम्** ॥ लक्ष्यते ज्ञायते अनेन विचारेणेति लक्षणम्, शेषस्य लक्षणं शेषलक्षणं शेषविचारः (अथशब्द आरम्भार्थकः) आरभ्यत इति सूत्रार्थः । (तत्प्रसङ्गादिति ।) तेन कर्मभेदनिरूपणहेतुताकेन कर्माङ्गत्वनिरूपणेनाङ्गत्वसामान्याश्रयद्रव्यगताङ्गत्वस्यापि ज्ञातत्वरूपप्रसङ्गसंगतेरित्यर्थः । (अर्थादिति ।) अङ्गित्वस्याङ्गत्वनिरूपकत्वादित्यर्थः । अङ्गित्वमध्यायार्थः अङ्गत्वमर्थादित्यपि यद्यपि वक्तुं शक्यते, तथाप्यङ्गमस्यास्तीत्यङ्गीति व्युत्पत्त्या अङ्गिनोऽङ्गघटितत्ववदङ्गस्याङ्गिघटितत्वाभावादङ्गित्वं गुरुभूतं नाङ्गत्वम्, अतोऽङ्गत्वमेव शास्त्रार्थ इति भावः । तदपि च, अङ्गत्वमपि च । तच्च, अङ्गत्वं च । अनेकप्रकारकम्, अङ्गत्वलक्षणं शेषपदशक्यतावच्छेदकमित्याद्यनेकधर्मविशिष्टम् । प्रकारविशेषमेव निरूपयति— अङ्गत्वलक्षणमित्यादिना ॥ १ ॥

शेषस्य लक्षणशून्यत्वाद्दुर्बोधस्वरूपतया तद्विचारो न संभवतीत्याक्षेपिकी संगतिः । **शेषः परार्थत्वात्** ॥ प्रयाजादिः परार्थत्वाच्छेष इत्युच्यते इति सूत्रार्थः । पारार्थ्यं शेषलक्षणमिति सिद्धम् । षष्ठीस्थले, 'दध्नेन्द्रियकामस्य—' इत्यादाविन्द्रियकामपदार्थकामनावत्पुरुषस्य कर्तुः षष्ठ्या कर्मकारकत्वबोधनस्थले । तत्कारकपदं तु, अङ्गत्वघटककारकपदं तु । भाक्तः, गौणः । तेषाम्, श्रुत्यादीनाम् । अङ्गत्वप्रामाण्यव्यवहारः, अङ्गत्वप्रमितिजनकतया व्यवहारः ॥ २ ॥

पारार्थ्ये निरूपिते प्रसङ्गात्तदाश्रयो निरूप्यत इति प्रसङ्गसंगतिः । **द्रव्यगुणसंस्कारेषु बादरिः** ॥ पारार्थ्यंद्रव्यगुणसंस्कारेष्वेव न तु कर्मफलपुरुषाणामिति बादरिर्मन्यते इति पूर्वपक्षसूत्रार्थः । **कर्मण्यपि जैमिनिः फलार्थत्वात्** ॥ 'अग्निहोत्रं जुहुयात्स्वर्गकामः' इति कर्मणोऽपि फलार्थत्वरूपान्यार्थत्वावगमात् कर्मण्यपि पारार्थ्यमस्तीति जैमिनिर्मन्यते इति सिद्धान्तसूत्रार्थः । **फलं च पुरुषार्थत्वात्** ॥ फलं च स्वर्गादिकं परार्थं पुरुषं प्रति विहितत्वादिति सूत्रार्थः । **पुरुषश्च कर्मार्थत्वात्** ॥ पुरुषश्च परार्थः कर्म प्रति कर्तृतया विहितत्वादिति सूत्रार्थः । विधेरिष्टभाव्यकभावनाविषयकत्वसिद्ध्यर्थं यागातिरिक्तस्वर्गादेर्भाव्यतयाङ्गीकार्यत्वात् कथं यागस्य भावनाभाव्यत्वं संभवतीत्यत आह— विधेः प्रवृत्तीत्यादि । तदर्थं, मशकार्थं । अपकारके, धूमे 'मशकेभ्यो धूमः' इति मशकार्थतया निर्दिष्टे । तदङ्गम्, यागाङ्गम् ॥ ३ ॥

यथा अग्निहोत्रादिकर्मणां विहितकर्मत्वात्फलार्थत्वमुक्तं तथा विहितकर्मत्वाविशेषात्प्रोक्षणावघातादिकर्मणां परमापूर्वाख्यफलार्थत्वं स्यादिति दृष्टान्तसंगतिः । **तेषामर्थेन संबन्धः** ॥ तेषां श्रुतिप्रमाणतया व्यवह्रियमाणानां द्वितीयातृतीयादीनाम् अर्थेन अङ्गत्वघटकीभूतकर्मत्वकरणत्वादिरूपार्थेन संबन्धः वाचकत्वरूपः संबन्ध इत्येकः सूत्रार्थः । अनेन सूत्रार्थेनाङ्गत्वघटकीभूतकर्मत्वकरणत्वादिवाचकत्वमङ्गत्वश्रुतेर्लक्षणमिति सिध्यति । तेषाम् अवघातोत्पवन-

शाखाहरणादीनाम् अर्थेन वैतुष्यादिना प्रयोजनेन संबन्धः, अतस्तत्तत्प्रयोजन-शून्येषु न ते प्रयोक्तव्या इत्यपरः सूत्रार्थः। अत एव, 'प्रोक्षिताभ्याम्—' इत्येतद्गतनिष्ठायाः कर्मत्वविशिष्टद्रव्यवाचित्वेन प्राधान्येन कर्मत्वरूपकारकवाचित्वाभावादेव, अवचर इत्येतद्गततृचः साधकतमत्वविशिष्टवाचित्वेन प्राधान्येन करणत्ववाचित्वाभावादेव। तत्र द्वितीया, 'व्रीहीन्प्रोक्षति' इत्यत्र द्वितीया। तत्रापि, 'व्रीहीन्प्रोक्षति' इत्यत्रापि। अतश्च, द्वितीयाया मुख्यश्रुतित्वाभावाच्च। लक्षणे, श्रुतिलक्षणे। द्वितीयाया मुख्यश्रुतित्वाभावेन द्वितीयायाः श्रुतित्वलक्षणसंभवसंपादकमुद्देश्यत्वपदं लक्षणे न देयमिति भावः। अन्यत्रापि, 'आज्यमुत्पुनाति' इत्युत्पवनादिविधावपि। तत्साधनत्वमेव, परमापूर्वसाधनत्वमेव। तथा च बहुषु उत्पत्त्यपूर्वेषु संनिपत्योपकारकाङ्गं प्रति प्रयोजकत्वशक्तिकल्पनापेक्षया आरादुपकारकाङ्गेषु क्लृप्तप्रयोजकत्वशक्तिमत एकस्य परमापूर्वस्य लाघवात्संनिपत्योपकारकाङ्गं प्रत्यपि प्रयोजकशक्तिमत्तया कल्पनात्तत्साधनत्वमवघातादेर्युक्तमिति भावः। ननु परमापूर्वसाधनत्वस्य उक्तरीत्या प्राकरणिकसर्वपदार्थसाधारणतया नोद्देश्यतावच्छेदकत्वमित्यत आह— प्रदेयघटकत्वसंबन्धेनेति। प्रदेयस्य पुरोडाशादेर्घटकत्वं यस्मिन्संबन्धे स प्रदेयघटकत्वसंबन्धः; प्रदेयघटितसंबन्ध इति यावत्। तथा च परमापूर्वसाधनाग्नेयेन्द्रयागसाधनप्रदेयपुरोडाशदधिपयस्त्वतत्प्रकृतित्वान्यतरसंबन्धेन परमापूर्ववत्त्वस्य व्रीह्यादिपदेन लक्षणीयत्वान्न जुह्वादिष्ववघातप्रसक्तिरिति भावः। तत्प्रत्यपि, परमापूर्वं प्रत्यपि। अत एव, आग्नेयादेर्यागस्योत्पत्त्यपूर्व इव परमापूर्वेऽपि साक्षात्साधनत्वादेव। (न वाङ्नियमन्यायोऽपीति।) 'यावत्या वाचा—' इत्युक्तस्य वाङ्नियमस्य दीक्षणीयाजन्योत्पत्त्यपूर्वार्थत्वमेव न तु परमापूर्वार्थत्वं दीक्षणीयायां साक्षात्परमापूर्वसाधनत्वाभावात्, अत्र तु तत्साधनत्वान्न वाङ्नियमन्याय इति भावः। नीवारादिषु, व्रीह्यभावे प्रतिनिधित्वेनागतेषु नीवारादिषु। सोऽपि, विधिरपि। प्रत्यासत्त्या, संनिधानेन। तस्यापि, उत्पत्त्यपूर्वस्यापि। अनिर्ज्ञातप्रकारत्वेन, अज्ञातप्रकारत्वेन। धर्मप्रयोजकत्वोपपत्तेः,

कथंभाव्याकाङ्क्षया धर्मप्रयोजकत्वोपपत्तेः । अपूर्वत्रयस्य, आग्नेयाग्नीषोमीयैन्द्राग्नजन्यापूर्वत्रयस्य । एकपदोपादानात्, उक्तापूर्वत्रयलक्षकेणैकव्रीहिपदेन ग्रहणात् । अवाक्यभेदः, 'व्रीहीन्प्रोक्षति' इत्यादौ नोद्देश्यानेकत्वप्रयुक्तवाक्यभेदः । अभावेऽपीत्यनन्तरं नीवारादिष्विति शेषः पूरणीयः ॥ ४ ॥

प्रोक्षणादीनां व्यवस्थापकव्रीह्यादिपदवद्यज्ञायुधानां व्यवस्थापकाभावात्सर्वत्र संकरः स्यादिति प्रत्युदाहरणसंगतिः । **द्रव्यं चोत्पत्तिसंयोगात्तदर्थमेव चोद्यते** ॥ स्फ्यादिद्रव्यम् उद्धननादिक्रियायामेव चोद्यते न तु सर्वत्र, 'स्फ्येनोद्धन्ति' इत्यादिविधौ उद्धननोत्पत्तिसंयोगादिति सूत्रार्थः । शक्यक्रिया, योग्यक्रिया । बहूनाम्, 'स्फ्येनोद्धन्ति' इत्यादीनाम् । अस्य च, यज्ञायुधवाक्यस्य च ॥ ५ ॥

स्फ्यादीनां व्यवस्थितनतत्तदुत्पत्तिसंयोगाद्व्यवस्थोक्ता; तद्वदारुण्यस्य स्ववाक्ये क्रियोत्पत्तिसंयोगाभावात्प्राकरणिकसर्वपदार्थे निवेशः स्यादिति प्रत्युदाहरणसंगतिः । **अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्यात्** ॥ अर्थैकत्वे सोमद्रव्यलाभरूपप्रयोजनैकत्वे एकहायनीद्रव्यारुण्यगुणयोः एकक्रियान्वयित्वात् नियमः स्यात् परिच्छेद्यपरिच्छेदकभावेन एकहायन्यामेवारुण्यस्य नियमः स्यात्, न तु प्राकरणिकसर्वद्रव्येष्विति सूत्रार्थः । तदर्थम्, करणत्वान्वयार्थम् । तत्रैव, अरुणगुण एव । अव्युत्पत्त्यापत्तेः, अन्वयानुपपत्तिरूपं बीजं विनापि लक्षणाकल्पनापत्तेः । (गुणवचनानाम्—' इति ।) 'नीलमुत्पलम्' इत्यादौ नीलादिगुणवाचकशब्दानामाश्रयतः स्वसमानाधिकरणद्रव्यवाचकोत्पलादिपदवशात् लिङ्गवचनानि स्त्रीत्वपुंस्त्वैकत्वबहुत्वबोधकवचनानि भवन्तीत्यर्थः । द्रव्यस्य, क्रयसाधनद्रव्यस्य । एकेनैव पदेन, पिङ्गाक्ष्येकहायनीपदद्वयान्तर्गतैकपदेन । इतरेण, उक्तपदद्वयघटकेनापरेण । अत्रापि, एकहायनीपदेऽपि (नेति वक्तुमिति ।) बहुव्रीहिस्थलेऽप्येकहायनरूपशक्यार्थनिष्ठत्वमेव न त्वन्यपदार्थनिष्ठत्वमिति भावः । समासानुशासनस्य, 'अनेकमन्यपदार्थे' इति सूत्रस्य । (मत्वर्थाद्यनुशासनवदिति ।) 'गुणवचनान्मतुपो लुगिष्टः' इत्यनु-

मासनवदित्यर्थः । ननु पिङ्गाक्ष्येकहायनीपदयोर्गुणमात्रपरत्वे तदर्थयोः पार्ष्ठिकान्वयबोधे सामानाधिकरण्यस्यैव संबन्धत्वावश्यिकतया सामानाधिकरण्यघटकद्रव्यस्य केन लाभ इत्यत आह— प्रमाणान्तरप्रमितेति । 'गवा क्रीणाति' इति प्रमाणान्तरप्रमितेत्यर्थः । योग्यत्वेऽपि, परिच्छेदकतया द्रव्यान्वययोग्यत्वेऽपि । वाक्यीयद्रव्यान्वयस्य, अरुणापदघटितवाक्यघटकैकहायनीपदार्थान्वयस्य । ('व्युत्पन्नत्वेऽपीति ।) कारकाणामपि समानाधिकरणानामरुणैकहायन्यादीनामन्वयः परस्परं व्युत्पन्न एव, अन्यथा 'ज्योतिष्टोमेन यजेत' इत्यत्र ज्योतिष्टोमपदार्थस्य कारकभूते यागेऽन्वयानापत्तेरिति रीत्या युक्तिसिद्धत्वेऽपीत्यर्थः । वस्तुतस्तु व्युत्पन्नत्वेऽपि, समानाधिकरणद्रव्यान्वयासंभवेन क्रियान्वयस्य व्युत्पन्नत्वेऽपि । अमूर्तत्वेन, मूर्तद्रव्यविलक्षणत्वेन । अयोग्यस्य, क्रयनिर्वर्तनानुकूलशक्तिरहितस्य । वाक्यीयक्रियान्वयायोगात्, उक्तवाक्यजन्यप्रतीतिमुख्यविशेष्यभूतक्रयभावनयान्वयस्य 'सर्वं वाक्यं क्रियायां परिसमाप्यते' इति यास्कवचनरीत्या पदजातरूपवाक्यघटकसर्वपदार्थानां क्रियान्वय इत्यर्थपर्यवसायिन्या वक्तव्यस्यायोगात् । तथा च आरुण्यस्यैकहायनद्रव्यान्वययोग्यत्वेऽपि क्रयान्वयस्य व्युत्पन्नत्वेऽपि उक्तयास्कमहर्षिवचनरीत्या प्रथमं क्रियान्वयमुक्त्वा पश्चाद्द्रव्यान्वयस्य वक्तव्यतया प्रथममयोग्यत्वेन क्रियान्वयस्यैवासंभवे पाश्चात्त्यद्रव्यान्वयः सुतरामसंभवीति भावः । (विशिष्टभावनाविधानोत्तरमिति ।) अरुणावाक्ये तृतीयान्तपदत्रयबोधिततत्तत्प्रातिपदिकार्थगतकरणत्वस्य द्वितीयान्तपदबोधितसोमगतभाव्यत्वाख्यकर्मत्वस्य च 'प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोस्तु प्रत्ययः प्राधान्येन' इति यास्कवचनरीत्या धात्वर्थक्रियान्विता या भावना तस्यां क्रयभावनायाम् 'सर्वं वाक्यं क्रियायां परिसमाप्यते' इति यास्कवचनरीत्या लेडर्थविधिना सह संबन्धसामान्येनान्वयं विषयीकृत्य अरुणागतकरणत्वसंबन्धिनी पिङ्गाक्षीगतकरणत्वसंबन्धिनी एकहायनीगतकरणत्वसंबन्धिनी सोमगतभाव्यत्वसंबन्धिनी क्रयभावना विधिसंबन्धिनीति प्रथमं यो बोधो जायते तदुत्तरमित्यर्थः । (क्रयस्य सोमसंबन्धवेलायामिति ।) सोमनिष्ठभाव्यत्वस्य निरू-

पकापेक्षायां धात्वर्थस्य क्रयस्य स्वनिष्ठकरणतानिरूपितत्वसंबन्धेन सोमनिष्ठभाव्यत्वेऽन्वयः आरुण्यादिकारकत्रयस्य धात्वर्थेन भेदान्वयाव्युत्पत्तेरभेदेनान्वयार्थं लक्षणां कल्पयित्वा धात्वर्थेन क्रयेणान्वये सति आरुण्यवता एकहायनीवता पिङ्गाक्षीवता क्रयेण सोमः साधनीय इति द्वितीयबोधो जायत इति भावः। (पश्चाद्विशेषणत्रयविधिकल्पनयेति।) मत्वर्थवैशिष्ट्यं किंरूपम् आरुण्यादिगतकरणता च किंनिरूपितेत्याकाङ्क्षायां तृतीयार्थकरणत्वस्य स्वनिरूपकभाव्यताश्रयत्वसंबन्धेन धात्वर्थक्रयेऽन्वयं विषयीकृत्य अरुणाया क्रयभाव्यका भावना पिङ्गाक्ष्या क्रयभाव्यका भावना एकहायन्या क्रयभाव्यका भावनेति बोधत्रयं जायत इति भावः। (पश्चात्परिच्छेदकीभूतद्रव्यापेक्षायामिति।) एकहायनीद्रव्यस्य अहं किंज्ञानजन्येतरभेदप्रकारकानुमितिविषयः स्यामिति परिच्छेदकाकाङ्क्षायां क्रयपरिच्छेदकस्य सत्याम्, तथा क्रयपरिच्छेदकस्यारुण्यस्य मत्परिच्छेद्यद्रव्यं द्वारभूतं किं येनाहं द्वारभूतद्रव्येण क्रयं परिच्छिन्द्यामित्याकाङ्क्षायां च सत्याम्, या अरुणा सा एकहायनी या एकहायनी सा अरुणेति परस्परविशेषणविशेष्यभावावगाही बोधो जायत इति भावः। (यवेष्विति।) यवेषु व्रीह्यवघातप्रवृत्तिवदित्यर्थः। गुणात्, 'वाससा क्रीणाति' इति वाक्यविहितवासोरूपगुणात्। अन्यथा, विक्रेत्रानतिवशेनोत्पत्तिशिष्टद्रव्यावरोधेऽपि द्रव्यान्तरनिवेशे। (दक्षिणानामपीति।) ज्योतिष्टोमदक्षिणया अग्नीषोमीयाद्युपकारप्रसङ्गः पौण्डरीके 'अयुतं दक्षिणा' इत्यनेन प्राकृतद्वादशशतदक्षिणाबाधश्च न स्याताम्, तावन्मात्रेण ऋत्विगानत्याद्यप्रसक्तेः सत्त्वादिति भावः। (गुणन्यायेति।) उत्पत्तिशिष्टगुणन्यायेत्यर्थः। (एकसोमप्राप्त्यर्थत्वाविशेषादिति।) भिन्नभिन्नक्रयाणामिति शेषः। (त्रिवत्स इति।) 'त्रिवत्सः साण्डः सोमक्रयणः' इत्युक्ते सर्वसोमक्रयणस्थानापन्ने साण्डे गवीत्यर्थः। निवेशः, आरुण्यनिवेशः। (कौस्तुभे विस्तर इति।) 'आरुण्योद्देश्यतावच्छेदकस्य स्त्रीत्वस्य पुंस्त्वावरुद्धे साण्डे गव्यभावेऽपि वैजात्यरूपस्योक्तोद्देश्यतावच्छेदकस्य स्त्रीत्वाघटितस्य एकहायन्यामिव त्रिवत्सेऽपि सत्त्वमक्षुण्णम्' इति कौस्तुभे विस्तरः

इत्यर्थः ॥ ६ ॥

पूर्वाधिकरणेऽमूर्तस्यारुण्यस्य विवक्षया स्ववाक्ये निवेशवदमूर्तस्यैकत्वस्यापि विवक्षया स्ववाक्ये निवेशः स्यादिति दृष्टान्तसंगतिः। **एकत्वसंयुक्तमेकस्य श्रुतिसंयोगात्** ॥ 'ग्रहं संमार्ष्टि' इत्यत्र एकत्वविशिष्टं ग्रहद्रव्यं संमार्जनीयम् एकत्वविशिष्टस्य श्रुत्या 'ग्रहम्' इत्येकवचनान्तपदनिरूपितशक्तिवृत्त्या संयोगादिति पूर्वपक्षसूत्रार्थः । **चोदिते तु परार्थत्वाद्यथाश्रुति प्रतीयेत** ॥ चोदिते विहितेऽर्थे 'पशुना यजेत' इति विहिते एकत्वविशिष्टपशौ तु विहितकोटिप्रविष्टमेकत्वं यथाश्रुति एकवचनशक्त्यनुसारेण प्रतीयेत; कुतः? परार्थत्वात् एकत्वविशिष्टपशोर्यागरूपं परं प्रत्यपेक्षितत्वात् तद्विशेषणस्य एकत्वस्यापि तत्त्वात्; तथा च विवक्षितत्वव्यापकं यत्साक्षात्परम्परया वा विहितत्वं तस्योद्देश्यविशेषणे एकत्वे असंभवेन 'व्यापकं निवर्तमानं व्याप्यमपि निवर्तयति' इति न्यायेन स्वव्याप्यं विवक्षितत्वमेकत्वे विहितत्वं निवर्तयतीति यावत् इति सिद्धान्तसूत्रार्थः । न ह्येतावता उद्देश्यस्वरूपस्याविवक्षाप्रसङ्गः उद्देश्यं विना विधानस्यैवायोगेनान्यथानुपपत्त्या उद्देश्यस्वरूपं विवक्षितमिति तत्त्वमिति भावः । लक्षणया, एकपदोपादानसामर्थ्याधीनलक्षणावृत्त्या । तत्रापीत्यादेः स्पष्टमित्यन्तस्य 'प्रकृतिप्रत्ययौ—' इति व्युत्पत्त्यविरोधाय लक्ष्यप्रातिपदिकार्थस्य साहित्यस्य प्रातिपदिकार्थान्वयाभावात्प्रत्ययार्थेऽन्वय इत्यभिप्रायः । पशुत्वेन विनियुक्तस्यापि, 'पशुना यजेत' इति पशुत्वेन यागे विनियुक्तस्य पशोरवयवस्यापि । लोहितादेः संस्कार्यत्ववत्, 'लोहितं निरस्यति' इति लोहितत्वावच्छेदेन निरसनसंस्कार्यत्ववत् । द्वयोः, एकत्वावच्छिन्नग्रहत्वावच्छिन्नयोः । एकप्रधानक्रियावशीकाराभावात्; एका या शाब्दबोधे प्रधानक्रिया मुख्यविशेष्यभूता क्रिया, तया वशीकारः अन्वयः, तस्य उद्देश्यद्वयेऽभावात् । (वैकृताङ्गवद्गुणानुरोधेनापीति ।) अस्य आकाङ्क्षां परिकल्प्येत्यादिनान्वयः । आमनहोमरूपविकृतिसंनिधिपठितेन गुणभूतेनापि क्लृप्तोपकारप्राकृताङ्गैर्निराकाङ्क्षविकृतिभावनायां स्ववैयर्थ्यपरिहारार्थमाकाङ्क्षां परि-

कल्प्य स्वस्यामनहोमादेर्यथा विकृतिभावनयान्वयः तथा एकोद्देश्यसंबन्धेन शान्तभाव्याकाङ्क्षया अपि भावनाया अपरोद्देश्यस्य उद्देश्यतया स्वतः प्रधानत्वेऽपि शाब्दबोधे प्रधानभूतभावनां प्रति गुणभूतस्यैकत्वस्य वैयर्थ्यपरिहारार्थं भावनायामाकाङ्क्षां परिकल्प्य अपरोद्देश्यस्याप्यन्वयोपपत्तिरिति भावः । पद-श्रुत्यैव वा, प्रातिपदिकवचनयोः 'ग्रहम्' इत्येकसुबन्तरूपपदघटकत्वरूपश्रुत्यैव वा । प्रधानयोरपि, ग्रहत्वविशिष्टैकत्वविशिष्टयोरपि । आकाङ्क्षां प्रकल्प्य, क्रियान्वयपूर्वकत्वं विनैव परस्परान्वयाकाङ्क्षां प्रकल्प्य । तदुपपत्तेः, परस्परान्वयोपपत्तेः । गुणानुरोधेन, चतुर्धाकरणरूपगुणानुरोधेन । प्रधानयोरभेदान्वयः, आग्नेयस्य पुरोडाशस्य चाभेदान्वयः । भावनायाः, आख्यातस्य । (एक-बोधविषयेति ।) एकपदजन्योपस्थितिविषयेत्यर्थः । अस्य कर्मत्वपर्याप्त्यधि-करणतावच्छेदकेऽन्वयः । धर्मवत्त्वम्, तादृशधर्मावच्छिन्नभाव्यताकत्वसंब-न्धेन धर्मविशिष्टत्वम् । (विषयेत्यन्तमिति ।) बोधविषय इत्येतत्पदमित्यर्थः । (पर्याप्तिपदकृत्यमिति ।) 'अध्वर्युयजमानौ वाचं यच्छतः' इत्यत्र अध्वर्यु-त्वयजमानत्वयोर्भिन्नपदोपात्तयोरुद्देश्यतावच्छेदकत्वादव्याप्तिवारणाय पर्याप्तीति निवेशनीयम्, निवेशे च द्वन्द्वरूपैकपदोपात्तसाहित्यस्य कर्मतापर्याप्त्यवच्छेद-कत्वाल्लक्षणसंगतिरिति भावः । अत एव, निमित्तस्य फलपदासमभिव्याहार-स्थल एव फलापेक्षत्वादेव । (निमित्तफलस्थल इति ।) जातेष्ट्यादौ निमित्त-वाक्यफलवाक्य-'द्वादशकपालं निर्वपेत्पुत्रे जाते'-'एतामिष्टिं निर्वपति पूत एव तेजस्वी'-इत्यत्र नैकस्या भावनाया द्विकर्मकत्वमिति भावः । (न वा कालेति ।) कालदेशोद्देश्ययोः फलानाक्षेपकत्वान्न वाक्यभेद इति भावः । फलादिसाहित्यस्य, फलसंस्कारसाहित्यस्य । स्वर्गस्येव, दर्शपूर्णमासौ प्रत्यनङ्गभूतस्य स्वर्गस्येव । तस्मिन्नेव, एकवचन एव । (अष्टवर्षत्वादेर्विवक्षेति ।) अष्टवर्षवाक्ये उद्देश्य-गतत्वेऽपि 'तमध्यापयीत' इत्यत्रोपादेयत्वेन विवक्षा कौस्तुभ उक्तेत्यर्थः ॥ ७ ॥

उद्देश्यविशेषणत्वाविशेषादेकत्ववद्ग्रहत्वस्याप्यविवक्षा स्यादिति दृष्टान्त-संगतिः । **संस्काराद्वा गुणानामव्यवस्था स्यात्** ॥ संमार्गादि

ग्रहाणामव्यवस्था स्यात् चमसादिसाधारण्यं स्यात् संसर्गादीनामपूर्वसाधनसंस्कारत्वात् चमसादीनामपि ग्रहवदपूर्वसाधनत्वाविशेषादिति पूर्वपक्षसूत्रार्थः । **व्यवस्था वार्थस्य श्रुतिसंयोगात्तस्य शब्दप्रमाणत्वात्** ॥ संमार्गरूपार्थस्य ग्रहेषु व्यवस्था नियतिः न चमससाधारण्यम्, 'ग्रहम्' इति द्वितीयया श्रुत्या ग्रहरूपार्थस्यैव संयोगात् तस्य संमार्गस्य शब्दप्रमाणत्वात् यथाशब्दमभ्युपगन्तव्यमिति सिद्धान्तसूत्रार्थः । आकृत्यधिकरणन्यायेन ग्रहप्रातिपदिकस्य ग्रहत्वधर्मपरतया तस्य ग्रहत्वस्य यादृशव्यक्तिद्वारा द्वितीयार्थकर्मत्वेन योगस्तादृशी व्यक्तिर्ग्रह एव न तु चमसः, ग्रहत्वस्योद्देश्यत्वमेव न तूद्देश्यविशेषणत्वं येनाविवक्षा स्यात् उद्देश्यस्य विधेयेनाकाङ्क्षितत्वाद्विधेयतुल्यतया विवक्षितत्वमिति तात्पर्यार्थः । लिङ्गादेव, सामर्थ्यादेव । (यवेष्विवेति ।) व्रीहिषु श्रुतानां प्रोक्षणावघातादीनामपूर्वसाधनत्वरूपेण यववृत्तित्ववदित्यर्थः । सत्यपि ज्योतिष्टोमेत्यादेर्भेदादित्यन्तस्य एकापूर्वसाधनत्वं व्रीहियवादिष्विव ग्रहचमसादौ नास्ति येन ग्रहे श्रुतः संमार्गादिश्चमसेषु स्यात्, चमसकरणकाभ्यासग्रहकरणकाभ्यासादीनां भेदेन तत्तदभ्यासमात्रापूर्वसाधनत्वात्तस्य तस्येति तात्पर्यार्थः । पयसेत्यादिग्रन्थस्यायमभिप्रायः— पयःकरणकग्रहणस्यावान्तरापूर्वसाधनोद्देशेन विधानात्तदङ्गत्वं न तु ज्योतिष्टोमापूर्वसाधनत्वावच्छिन्नोद्देश्यताकतया ज्योतिष्टोमाङ्गत्वं यथा तथा संमार्गादीनां तत्तदभ्यासापूर्वसाधनत्वावच्छिन्नोद्देश्यताकतया तत्तदभ्यासाङ्गत्वमेव, न तु ज्योतिष्टोमीयपरमापूर्वरूपैकापूर्वसाधनत्वावच्छिन्नोद्देश्यताकतया ज्योतिष्टोमाङ्गत्वं येन ग्रहचमसयोरप्येकापूर्वसाधनत्वेन चमसेऽपि संमार्गः स्यादिति । (लक्षणापत्तेरिति ।) ग्रहपद इति शेषः ॥ ८ ॥

संस्कारविनियोगे निरूपिते गुणविनियोगस्य प्रसक्तत्वात्स निरूप्यत इति प्रसङ्गसंगतिः । **आनर्थक्यात्तदङ्गेषु** ॥ न सप्तदशारत्नित्वं वाजपेये निवेश्यते तत्र तस्य प्रयोजनाभावात्, किं तु वाजपेयाङ्गेषु पशुयागेषु निवेश्यत इति सूत्रार्थः । (न यूपोद्देशेनेति ।) न किंचिदविशेषितयूपोद्देशेनेत्यर्थः ।

अतिप्रसङ्गापत्तेः, वाजपेयानङ्गकेवलपशुयागेऽपि सप्तदशारत्नित्वापत्तेः । (वाज-पेयेन विशेषण इति ।) यूपस्येति शेषः । साहश्यात्, ऊर्ध्वत्वसाहश्यात् । (व्यवहितत्वादिति चेति ।) अरत्नेर्वाजपेयस्येति पदेनेति शेषः । यत्तु शिव-तत्त्वविवेके अप्पयदीक्षितैः 'अमृताक्षरमिति पद एकस्मिन्नक्षरभागस्योद्देश्यत्व-ममृतभागस्य विधेयत्वं च संभवति 'सप्तदशारत्निः' इत्यस्मिन्पदे अरत्न्यंश उद्देश्यत्वस्य सप्तदशत्वांशे विधेयत्वस्य च मीमांसकैः स्वीकृतत्वात्' इत्युक्तं तत्प्रौढ्या, मीमांसाभाष्यवार्त्तिकशास्त्रदीपिकाभाट्टदीपिकादिप्रसिद्धमीमांसाग्रन्थेषु एकस्मिन्सप्तदशारत्निपदे उद्देश्यविधेयोभयस्वीकारे एकप्रसरताभङ्गापत्तिदोषप्रसर-स्यैवोक्तत्वात् ॥ ९ ॥

सप्तदशारत्नित्वस्य प्रकरणवति वाजपेये निवेशासंभवात्तदङ्गेषु निवेश इत्युक्तम्, इहाभिक्रमणस्य प्रकरणवति निवेशे बाधकाभावात्तत्र तस्य निवेशः स्यादिति प्रत्युदाहरणसंगतिः । **कर्तृगुणे तु कर्मासमवायाद्वाक्यभेदः स्यात्** ॥ कर्तृगुणे अभिक्रमणे स्वतः क्रियासंबन्धाभावात् कर्तृद्वारा क्रिया-संबन्धस्य वक्तव्यत्वेन कर्तुश्च प्रधाने यागेऽपि संबन्धात्तत्र तद्वारा अभिक्रमणस्य संबन्धार्थम् 'अभिक्रामं जुहोति' इति वाक्याद्भिक्रमणस्य भेदनं स्यात् विच्छेदः स्यात् वाक्याधीनहोममात्राङ्गत्वं विच्छिद्य दर्शपूर्णमासयागाङ्गत्वमभिक्रमणस्य स्यादिति यावदिति पूर्वपक्षसूत्रार्थः । **साकाङ्क्षं त्वेकवाक्यं स्यादस-मात्पं हि पूर्वेण** ॥ 'जुहोति' इत्युक्ते दूरस्थः कर्ता समीपाभिक्रमणं विना कथमाहवनीये होमं कुर्यादित्याकाङ्क्षया 'अभिक्रामम्' इति पदेन साकाङ्क्षं जुहोतिपदम् । तेन पूर्वेणाभिक्रमणपदेन एकवाक्यं स्यात्, अन्यथा हि असमाप्तम् अनिवर्तिताकाङ्क्षं जुहोतिपदं स्यादिति सिद्धान्तसूत्रार्थः । आकाङ्क्षापूरकस्य 'अभिक्रामम्' इति पदस्य तदर्थस्य च तद्वाक्याद्विच्छेदन-मन्याय्यमिति तात्पर्यार्थः । कर्तृरूपस्य, आश्रयरूपस्य । तदीयकर्तुः, सर्व-होमकर्तुः । (प्रत्यासत्तीति ।) संनिधानमित्यर्थः । अनुपात्तस्यापि, अभि-क्रमणवाक्ये केनापि पदेन शक्त्यानुपात्तस्यापि । आख्यातगम्यस्य, निरुक्त-

लक्षणयाख्यातबोध्यस्य । तद्द्वारैव, आख्यातगम्यकर्तृद्वारैव । णमुलन्तस्येत्यादेरयं भावः— पूर्वकालतादिरूपधातुसंबन्धे '-प्रत्ययाः' इत्यधिकृत्य क्त्वार्थे णमुलो विधानादभिक्रमणस्य क्रिययैव संबन्धनियम इति । (प्रमाणाभावादिति।) दर्शपूर्णमासप्रकरणविरोधेन प्रयाजसंनिधानस्य भाष्यकाराभिमतप्रमाणस्य दुर्बलतया प्रमाणत्वासंभवादित्यर्थः । (होमसंबन्ध इति ।) अभिक्रमणस्येति शेषः । संकोचे, अभिक्रमणस्य प्रयाजहोममात्राङ्गत्वरूपसंकोचे । ('वेद्यां हवींषि' इतिवदिति ।) 'वेद्यां हवींष्यासादयति' इत्यत्राङ्गप्रधानसर्वहविरासादनाङ्गत्वं यथा वेद्यास्तथेत्यर्थः । नन्वभिक्रमणस्य पूर्वोत्तरभावेन प्रयाजतदङ्गसंबन्धरूपसंदंशाख्यावान्तरप्रकरणरूपसंकोचकप्रमाणस्य सत्त्वात्कथं संकोचकप्रमाणाभाव इत्यत आह— वाचनिकाङ्गेति । वाक्यसद्भावमेवोपपादयति— यदि हीति । वाक्याभावे अभिक्रामतीत्येतन्मात्रं श्रूयेत प्रकरणात्तस्य प्रयाजसंबन्धसिद्धेः, इह तु जुहोतिरपि श्रूयते, अतो होमसामान्यस्याभिक्रमणसंबन्धबोधकवाक्यमस्तीति भावः । (फलाभावादिति ।) अङ्गेष्विति शेषः । फलवतो येतिकर्तव्यताकाङ्क्षा तस्या एव प्रकरणत्वादिति भावः । अन्यथा, अङ्गस्याप्युक्तविधप्रकरणस्वीकारे । (वाचनिकाङ्गेति ।) 'इदं प्रयाजार्थम्' इति वचननियमिताङ्गेत्यर्थः । (तन्मात्रेति ।) वाचनिकाङ्गमात्रेत्यर्थः । (क्रतूपकारेति ।) उक्तोपकारलक्षणफलवत्त्वादङ्गस्याप्युक्तप्रकरणं संभवतीति भावः । सा, इतिकर्तव्यताकाङ्क्षा । संनिध्याम्नातविषये, प्रधानसंनिध्याम्नातविषये । न परस्पराङ्गत्वप्रसङ्गः, प्रयाजानूयाजादीनामितरेतराङ्गत्वप्रसङ्गः । तदा, प्रधानगतबलवत्त्वेन प्रतिबन्धकेनाङ्गगतेतिकर्तव्यताकाङ्क्षायाः संनिध्याम्नाताङ्गविषयत्वाभावदशायाम् । तन्निवृत्तिः, अङ्गगतोक्ताकाङ्क्षानिवृत्तिः । (आक्षेपलभ्यस्वसंपादनेनेति ।) स्वस्याङ्गस्य संपादनमुत्पादनं येन तत्स्वसंपादनम्, आक्षेपलभ्यं च तत्स्वसंपादनं च आक्षेपलभ्यस्वसंपादनमिति विग्रहः; अङ्गगतस्वोत्पादकाकाङ्क्षारूपापेक्षालभ्यसाधनेन वस्तुनेत्यर्थः । उज्जीवनम्, उत्पादनम् । ननु उत्तेजकाभावविशिष्टमण्यभावस्य दाहं प्रति कारणत्वाद्वाचनिकाङ्गसंबन्धरूपोत्तेजकाभावविशिष्टप्रधानाकाङ्क्षाभावः

संनिध्याम्नातविषयेऽङ्गस्येतिकर्तव्यताकाङ्क्षावत्त्वे कारणमिति कल्प्यतां न तु वाचनिकाङ्गेनाकाङ्क्षोत्पादनमित्यत आह— न तु मण्यादाविवेति । (व्यभिचाराभावाच्चेति ।) दाहं प्रति वह्नेः केवलस्य कारणत्वोक्तौ मणिसत्त्वे दाहः स्यात्, अतः कारणासत्त्वेऽपि कार्याद्व्यभिचार इति तद्वारणार्थमुत्तेजकाभावविशिष्टमण्यभावस्य कारणत्वावश्यिकतया उत्तेजककल्पनमावश्यिकम्; प्रकृते त्वङ्गगतेतिकर्तव्यताकाङ्क्षां प्रति अङ्गसंबन्धिवाचनिकाङ्गस्य हेतुत्वे व्यभिचाराभावान्न वाचनिकाङ्गाभावविशिष्टप्रधानाकाङ्क्षाकल्पनमिति भावः । तत्त्वेन, आनर्थक्यपरिहारकत्वेन । प्रयाजे संदंशमुपपादयति— अस्ति चेति । जौहवस्याज्यस्य वाचनिकत्वम् 'यज्जुह्वां गृह्णाति प्रयाजेभ्यस्तत्, यदुपभृति गृह्णाति प्रयाजानूयाजेभ्यस्तत्' इत्यादिवाक्यसिद्धम् । सः, वाचनिकाङ्गसंदंशाधिकारः । आक्षेपेण, प्रक्षेपपूर्वकत्यागघटकप्रक्षेपस्य घटिते घटकापेक्षेति रीत्या । प्राप्त्युपपत्तेः, ज्ञानोपपत्तेः ॥ १० ॥

अवान्तरप्रकरणादभिक्रमणवत्सामिधेन्यङ्गसंदशरूपावान्तरप्रकरणादुपवीतस्य सामिधेन्यङ्गत्वं स्यादिति दृष्टान्तसंगतिः । **संदिग्धे तु व्यवायाद्वाक्यभेदः स्यात्** ॥ अवान्तरप्रकरणानुवर्तने संदिग्धे सति निविद्भिर्व्यवधानात् 'उपव्ययते' इत्यस्य सामिधेनीवाक्येनैकवाक्यत्वाभावः स्यादिति सूत्रार्थः । अन्तरा, मध्ये । अनूच्यम्, स्वरविशेषेणोच्चारणीयम् । सदेवत्वाय, देवत्वसहिताय । काम्यकल्पैः, काम्यसामिधेनीप्रयोगैः । पूषानुमन्त्रणमन्त्रवत्, दर्शपूर्णमासप्रकरणपठितस्य तदनङ्गस्य पूषानुमन्त्रणमन्त्रस्य तत्प्रकरणाविच्छेदकत्ववत् । तदनुपपत्तेः, सामिधेनीप्रकरणविच्छेदकत्वानुपपत्तेः । सामिधेन्यङ्गत्वोपपत्तेः, अग्निसमिन्धनप्रकाशकरूपसामिधेन्यङ्गत्वोपपत्तेः । (यागजन्यफलेति ।) दर्शपूर्णमासयागजन्यस्वर्गफलेत्यर्थः । उत्तरकालम्, पूषानुमन्त्रणोत्तरम् । अङ्गानि, दर्शपूर्णमासाङ्गानि । परप्रकरणे, दर्शपूर्णमासप्रकरणे । अनारभ्याधीतन्यायेन, पर्णतान्यायेन । अङ्गत्वोपपत्तेः, उत्कर्षेणाङ्गत्वोपपत्तेः । (दर्शाङ्गत्वापत्तेरिति ।) दर्शपूर्णमासप्रकरणपाठेनेति शेषः । 'अन्तरानूच्यम्'

इत्यादीनाम्, 'अन्तरानूच्यम्' इत्याद्युक्तान्तरत्वादीनाम् । प्रकरणेन, संनिध्यपेक्षया प्रबलेन दर्शपूर्णमासप्रकरणेन । आश्रयाभावात्, सामिधेन्याः प्रकरणाभावे प्रकरणेन सामिधेन्यनुवचनरूपाश्रयालाभात् । काम्येषु, सामिधेनीसंख्यादिरूपगुणानां फलसाधनत्वप्रतिपादककाम्यवाक्येषु । (अनुवचनान्तरस्येति ।) फलोद्देशेनानुवचनान्तराणि विधीयन्ते न तु प्रकृतसामिधेनीराश्रित्य तदनुवचनं वाश्रित्य फलोद्देशेन गुणा विधीयन्ते येनाश्रयापेक्षेति भावः । नन्वनुवचनान्तरस्य निर्धर्मकतया कथं फलसाधनत्वमित्यत आह— तस्य चेत्यादि । विनियोगात्, प्रकल्प्य, द्वितीयान्तं तृतीयान्तं कृत्वा । अतश्च, अनुवचनजनकतयाङ्गत्वं न तु तत्फलप्रकाशकतयेत्युक्तत्वाच्च । द्वारलोपात्, अनुवचनफलप्रकाशनरूपद्वारलोपे तु । (बाध इति ।) ऋचामिति शेषः । ऊहः, तत्फलवाचकपदस्य ऋक्षु प्रक्षेपः । अनुशब्देन, 'अनुब्रूयात्' इत्येतद्घटकानुशब्देन । तस्य च, आनन्तर्येण च । परप्रयुक्तत्वेन, पूर्वार्थप्रतियोगिकत्वेन । वैकृतानुवचनेन, काम्यानुवचनेन । प्रसङ्गात्, अन्योद्देशेन विहितेन तदन्यस्याप्युपकारसिद्धिरूपप्रसङ्गात् । न तस्य पृथगनुष्ठानम्, न प्राकृतानुवचनस्य पृथगनुष्ठानम् । तेष्वपि, काम्येष्वपि । तदङ्गत्वमेव, काम्यानुवचनाङ्गत्वमेव । तेषाम्, काम्यानुवचनानाम् । प्राकृताङ्गनिराकाङ्क्षाणाम्, क्लृप्तोपकारप्राकृताङ्गैः स्वस्याप्युपकारलाभेऽक्लृप्तोपकाराङ्गविषये आकाङ्क्षारहितानाम् ॥ ११ ॥

उपवीतस्य बाधकाभावाद्दर्शाङ्गत्वमुक्तम्; अत्र वारणादीनां यज्ञसंबन्धित्वेन श्रुतानामयज्ञरूपाधाने निवेशो यज्ञसंबन्धस्य बाधकस्य सत्त्वादाधानाङ्गपवमानेष्टिरूपयज्ञ एव निवेशः स्यादिति प्रत्युदाहरणसंगतिः । **गुणानां च परार्थत्वात्संबन्धः समत्वात्स्यात्** ॥ गुणानां वारणादीनां पवमानेष्टीनां च परार्थत्वात् अन्यार्थत्वात् आधानार्थत्वात् पवमानेष्टीनां वारणादिनिर्मितपात्राणां च परस्परमङ्गाङ्गिभावरूपसंबन्धो नास्ति, वारणाद्युद्देश्यतावच्छेदकस्य यज्ञत्वस्य यागान्तर इव पवमानेष्टिषु सत्त्वात् यज्ञत्वाकारेण पवमानेष्टीनां तेषां चाङ्गाङ्गिभावः स्यात्, पवमानेष्टित्वेन परं न स्यादिति

सूत्रार्थः । (यज्ञावचर इति ।) यज्ञोऽवचर्यत उत्पाद्यतेऽनेनेति व्युत्पत्त्या यज्ञसाधनमित्यर्थः । यज्ञ एव, आधानाङ्गभूतयज्ञ एव । पवमानहविषाम्, हविर्विशेषसाध्यपवमानेष्टीनाम् । (अग्न्यङ्गत्वावगतेरिति ।) सप्तम्यन्ताहवनीयपदेन लक्षणयाग्न्युद्देश्यत्वं समर्प्य जुहोतिना पवमानेष्टिरूपहोमविधानादिति भावः । (आधानाङ्गत्वाभावेनेति ।) पवमानेष्टीनामिति शेषः । आनर्थक्यतदङ्गन्यायासंभवात्, पवमानेष्ट्याधानयोरङ्गाङ्गिभावस्यैवाभावे तयोरुक्तन्यायप्रवृत्त्यसंभवात् । (असंनिहितत्वादिति ।) कारणादिनेति शेषः । उपस्थित्यभावेनेत्यादेरयमाशयः— उपस्थितिसत्त्वे उपस्थितिरूपकारणवशात्प्रा...न्यलक्षणा संभवेत्, तदभावान्न तत्संभव इति । कल्प्यम्, 'यदाहवनीये जुहोति' इति वाक्यान्तरकल्पना । तदभावेऽपि, पवमानेष्टिप्रकरणे तादृशवाक्याभावेऽपि । तत्, 'यदाहवनीये—' इति वाक्यम् । अत एव, 'यदाहवनीये—' इति पवमानेष्टिप्रकरणगतवाक्येन होमोद्देशेनाहवनीयाधिकरणत्वविधानादेव । (तदानीमिति ।) पवमानेष्टिहोमकाले, आधानहोमानामाहवनीयसाध्यतया पवमानेष्ट्यनन्तरमेव मुख्याहवनीयसिद्धेः ततः पूर्वं मुख्याहवनीयाभावादिति भावः । आधानाङ्गभूतहोमानामाहवनीयाधिकरणत्वाङ्गीकारे 'गार्हपत्ये हवींषि श्रपयति' इति विधिबलाच्छ्रपणाधिकरणत्वेन विहितो गार्हपत्योऽपि पवमानहविःश्रपणस्य न स्यात्, पवमानहविःसंस्कृतगार्हपत्यस्यैव चोदकेन दर्शपूर्णमासप्रकृतिपवमानेष्टौ प्रापणीयत्वात्पवमानहविर्वेलायां कथं तादृशाग्नेः प्राप्तिरित्यत आह— न चेति । (सति संभव इति ।) सर्वसंस्काराभावेऽपि यत्किंचित्संस्कारयुक्तत्वरूपस्वभावे प्रकृतौ दृष्टस्य गौणगार्हपत्यस्य सर्वसंस्कारसंस्कृतस्य गार्हपत्यस्य यत्किंचित्संस्कारवत्त्वरूपगौणत्ववत्तायाः अपि सत्त्वेन गौणगार्हपत्यस्य पवमानेष्टौ ग्रहणसंभवे सति तत्परित्यागेन लौकिकाग्निग्रहणमयुक्तमिति भावः । तत्र, पवमानेष्टिहविःश्रपणे । (गौणगार्हपत्येति ।) परमापूर्वजन्यमुख्यगार्हपत्याभावेऽप्युत्पत्त्यपूर्वजन्यगौणगार्हपत्यसंभव इति भावः । वचनान्तरे, पवमानेष्टिप्रकरणीय-'यदाहवनीये–' इति वचनान्तरे । तदर्थम्, अपूर्वसाधनत्वलक्षणार्थम् ।

प्रधानसंबन्धस्यैव, आधानसंबन्धस्यैव । तदङ्गावनारः, आधानाङ्गपवमानेष्टिषु प्रवेशः । पात्राणीत्यादेरयमाशयः— वारणस्य वैकङ्कतस्य च पात्रद्वारेणैव क्रियायां निवेश्यतया संनिहितपवमानेष्टिक्रियाजन्यापूर्वसाधनत्वेन पात्राण्युद्दिश्य वारणादिविध्यावश्यिकतया प्रकृतपवमानेष्टिमात्रविषयत्वरूपमङ्गत्वं वारणादीनां स्यात्, न त्वेतदस्तीति ॥ १२ ॥

पूर्वत्र वाक्यात्प्रकरणस्य बाध उक्तः, तद्वदत्रापि वाक्याल्लिङ्गक्रमबाधः स्यादिति दृष्टान्तसंगतिः । **मिथश्चानर्थसंबन्धः** ॥ मिथः मिथोभूतानां युगलभूतानामनुवाक्यानां यतो दर्शपूर्णमासयोर्वार्त्रघ्नादिमन्त्रार्थसोमाभावेन देवताद्वारकसंबन्धाभावः, अत आज्यभागाभ्यां संबन्ध इति सूत्रार्थः । ('यद्यप्यन्यदैवत्यः' इति ।) अग्नीषोमीयप्रकरणपठितस्य 'त्वं ह्यग्ने प्रथमो मनोता' इति मन्त्रस्याग्निदेवताप्रकाशकस्य अग्निसोमप्रकाशनसामर्थ्याभावेन केवलाग्निदैवत्यसवनीयपश्वादावुत्कर्षे प्राप्ते 'यद्यप्यन्यदैवत्यः पशुराग्नेय्येव मनोता कार्या' इति वचनेनाग्नीषोमीयपशावेव मनोताया निवेश इति सिद्धान्तितमिति भावः । आज्यभागयोरिव प्रधानकर्मणोरपि मन्त्रयुगलयोर्लिङ्गाबाधात्प्रधानकर्मणोर्मन्त्रयुगलविनियोगो वाक्यात्स्यादित्यत आह— न हीति । (अमावास्यायामधिष्ठानत्वस्याप्यभावाच्चेति ।) पौर्णमास्यामग्निसोमगतन्यासज्ज्यवृत्तिदेवतात्वं प्रति सोमस्याधिष्ठानत्वेऽपि इत्यादौ पूरणीयम् ॥ १३ ॥

अबाधेनोपपत्तौ वाक्याल्लिङ्गबाधनमयुक्तमित्युक्तम्, तद्वदानन्तर्याबाधेन मुष्टीकरणस्य वेदनाङ्गत्वं स्यात्, न त्वानन्तर्यं बाधित्वा प्राकरणिके निवेश इति दृष्टान्तसंगतिः । **आनन्तर्यमचोदना** ॥ आनन्तर्यं प्रकरणविरोधे सत्यङ्गाङ्गिभावे मुष्टीकरणावेदनयोः अचोदना अगमकमिति सूत्रार्थः । अवनेनिक्ते, क्षालयति । उलपराजिः, वेद्यास्तरणयोग्यस्तृणविशेषः । एकवाक्यत्वाद्वा, 'मुष्टीकरोति' 'आवेदयति' इत्यनयोराख्यातयोः 'पश्य मृगो धावति इतिवदेकवाक्यत्वाद्वा । (आकाङ्क्षाविरहेति ।) दर्शनस्य कर्माकाङ्क्षा यथ धावनविषये तथा आवेदनस्य मुष्टीकरणविषये आकाङ्क्षाविरहेत्यर्थः । (यच्च

न्द्राद्युपबन्धाभाव इति ।) 'यस्योभयं हविरार्तिमार्च्छेत्' इत्यत्रेवात्राभाव इत्यर्थः ॥ १४ ॥

यथा मुष्टीकरणादेरानन्तर्यरूपं संनिधानमकिंचित्कृत्य बहुपदार्थाङ्गत्वमुक्तं तथा चतुर्धाकरणस्य संनिध्याम्नातपुरोडाशवाक्यमकिंचित्कृत्याग्नेयानाज्यपुरोडाशादीन्सर्वान्प्रत्यङ्गत्वं स्यादिति दृष्टान्तसंगतिः । **शेषस्तु गुणसंयुक्तः साधारणः प्रतीयेत मिथस्तेषामसंबन्धात्** ॥ 'आग्नेयं चतुर्धा करोति' इत्यत्र चतुर्धाकरणशेषः अग्निगुणेन दृष्टद्वारा संयुक्तः आग्नेयाग्नीषोमीयादिसाधारणः प्रतीयेत, तेषाम् अग्निसोमादिदेवानां चतुर्धाकरणोद्देश्यतावच्छेदककोटौ मिथः परस्परसाहित्येन उद्देश्यतावच्छेदकत्वासंबन्धादिति पूर्वपक्षसूत्रार्थः । **व्यवस्था वार्थसंयोगाल्लिङ्गस्यार्थेन संबन्धाल्लक्षणार्था पुनः श्रुतिः** ॥ केवलाग्निदैवत्यपुरोडाशे चतुर्धाकरणस्य व्यवस्था व्यवस्थितिः न द्विदैवत्येऽपि 'आग्नेयम्–' इति केवलेनार्थेन देवतारूपेणाग्निना चतुर्धाकरणोद्देश्यद्रव्यस्य संयोगात् तद्धितवृत्तिसामर्थ्यरूपलिङ्गस्य अर्थेन 'आग्नेयम्' इति तद्धितप्रत्ययार्थघटकाग्निसोमदेवतावृत्तिव्यासज्ज्यवृत्तिदेवतात्वानाश्रयेणाग्निना संबन्धात् 'पुरोडाशं चतुर्धा करोति' इति चतुर्धाकरणस्य पुनः श्रवणं चतुर्धाकरणोद्देश्यस्याग्निदेवताकद्रव्यस्य पुरोडाशत्वज्ञापनार्थमिति सिद्धान्तसूत्रार्थः । कारकतातिरिक्तसंबन्धेन तद्धितवृत्तौ विशिष्टस्य व्युत्पन्नत्वं संभवतीत्यङ्गीकारिणं प्रत्याह– कथंचिद्वेति । तथा, उद्देश्यतावच्छेदकम् । अग्नीषोमीयहविःसामान्यस्याग्नेयपदेन ग्रहणं संबन्धतद्धितपक्षेऽपि न संभवतीत्याह– अथ वेति । कारकतातिरिक्तसंबन्धेन तद्धितवृत्ताविव कारकतासंबन्धेन तद्धितवृत्तावपि विशिष्टं व्युत्पन्नमित्यङ्गीकृत्याह– अस्तु वेति । सामर्थ्यविघानापत्तेः, वृत्त्यघटकानपेक्षत्वरूपसामर्थ्यविघातापत्तेः । तस्य, द्रव्यत्वमात्रस्य । तत्, अपूर्वसाधकत्वलक्षकम् । (अनुपपत्तेरिति ।) देवतात्वनिरूपकद्रव्यत्वस्यैव हविष्ट्वादिति भावः । (नियम्यत इति ।) न तु देवतातद्धितार्थो विवक्षित इति भावः । सत्त्वात्, सत्त्वप्रसङ्गात् । देवतात्वरूपार्थस्थतद्धितेनाविवक्षिततया संबन्ध-

सामान्यार्थस्वीकारप्रसङ्ग इति भावः । प्रथमावगतस्य, हविष्ट्वशरीरे प्रथमावगतस्य । (हविरार्तिन्यायेनेति ।) 'यस्योभयं हविरार्तिमार्च्छेत्' इत्यत्र आर्तेर्निरूपकापेक्षत्वान्नित्यस्वेन निमित्तत्वासंभवाच्च हविःपदार्थस्यार्तावन्वये विशिष्टोद्देशापत्तेरार्तिपदस्य लक्षणया हविरार्तिपरत्वं हविःपदं तात्पर्यग्राहकमिति न्यायेन । अनिमित्तस्थलेऽपि लक्षणास्तीति प्रदर्शयितुम् 'अर्धमन्तर्वेदि' इतिवदिति । 'अर्धमन्तर्वेदि मिनोति, अर्धं बहिर्वेदि' इति वाक्यस्य लक्षणया देशविशेषपरत्ववदित्यर्थः ॥ १९ ॥

इति भाट्टकल्पतर्वभिधायां भाट्टदीपिकाव्याख्यायां तृतीयाध्यायस्य
प्रथमः पादः ।

## द्वितीयः पादः ।

अस्मिन् लिङ्गविनियोगस्य प्राधान्येन विचार्यत्वादस्य लिङ्गपादत्वम् ; श्रुतिकल्पनाद्वारा विनियोजकतया लिङ्गस्य श्रुतिपादेन पूर्वेणोपजीव्योपजीवकभावः संगतिः । आग्नेयपदस्याग्नेयाग्नीषोमीयोभयाबोधकत्वाच्चतुर्धाकरणमाग्नेयमात्रे विनियुज्यते नोभयस्मिन्नित्युक्तं पूर्वाधिकरणे ; मन्त्रस्य मुख्यगौणार्थद्वयबोधकत्वादुभयत्र विनियोगः स्याद्बाधकाभावादिति प्रत्युदाहरणसंगतिः । **अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावः स्यात्तस्मादुत्पत्तिसंबन्धोऽर्थेन नित्यसंयोगात्** ॥ मन्त्रेषु अर्थबोधकत्वरूपशक्तिसंयोगात् शेषभावः क्रतुं प्रति शक्यार्थद्वारा स्यात्, तस्मादर्थविशेषात् उत्पत्तिसंबन्धः शक्तिरूपः संबन्धः, अर्थविशेषे शक्तिरिति यावत् । उत्पत्तिसंबद्धशब्दस्य शक्तिपरत्वम् 'औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धः' इति चोदनापादसूत्रे निरूपितम् । अर्थविशेषे शक्तौ हेतुः अर्थेन नित्यसंयोगादिति अर्थविशेषेण साकं नित्यसंयोगात् पुंबुद्ध्यनधीनसंबन्धात्, अग्निशब्दस्य माणवके साक्षान्न संबन्धः किं तु अग्निरूपस्यार्थेन सादृश्यम् । स च सादृश्यसंबन्धो ज्ञात एव सन्संबन्धो भवति ।

ज्ञानं च प्रयोक्तृपुरुषीयमिति सादृश्यसंबन्धस्य पुंबुद्धिप्रभवत्वम् । सादृश्यस्यार्थद्वयनिष्ठत्वेऽपि शब्दनिष्ठत्वाभावाच्छब्दसंबन्धत्वमौपचारिकम् । अत एव शक्तेरेव शब्दसंबन्धत्वं न तु लक्षणाया इति सिद्धवत्कृत्य स्थपतीष्टयधिकरणे 'स्थपतिर्निषादः स्याच्छब्दसामर्थ्यात्' इति सूत्रे शक्तेः शब्दसामर्थ्यत्वमुक्तम् । लक्षणाया अपि शब्दसामर्थ्यत्वरूपशब्दसंबन्धत्वाङ्गीकारे तत्सूत्रेण लक्षणानिराकरणं निषादस्थपतिपदे कथमुक्तं स्यात्? अत एव लक्षणाया जघन्यवृत्तित्वमिति सूत्रशक्यतात्पर्योभयार्थः क्रोडीकृतः । (कारकवाचीति ।) करणत्ववाचीत्यर्थः । (पदरूपेति ।) द्वितीयातृतीयादिरूपेत्यर्थः । देवानां सदनं स्थानभूतं ब[र्हिः] [दा]मि खण्डयामि इति मन्त्रार्थः । स्मारकाकाङ्क्षा, मम स्मारकं किमित्याकाङ्क्षा । आकाङ्क्षारूपतात्पर्यग्राहकसत्त्वे, भोजनार्थप्रवेशनक्रियाया मम किं कर्मेत्याकाङ्क्षारूपतात्पर्यग्राहक[स]त्त्वे । चरितार्थस्य, निवृत्तप्रयोजनाकाङ्क्षस्य । अत एव, जघन्यार्थाविनियोजकत्वानुपपत्तेरेव । (तत्स्मारकेति ।) जघन्यार्थस्मारकेत्यर्थः । तत्कल्पना, उपयोगकल्पना । (विरोधिगुणान्तरेति ।) पूषदेवतारूपगुणविरुद्धाग्न्यादिदेवतागुणविधायिविधिवाक्य[स्ये]व इत्यर्थः । (सामान्यसंबन्ध इति ।) यागत्वरूपसामान्यधर्मावच्छिन्नेन स्वस्य संबन्ध इत्यर्थः । अप्रयुक्तलक्षणा, सांप्रतिकलक्षणा ॥ १ ॥

मन्त्रस्य मुख्य एव विनियोग इत्युक्तम्, तस्यापवाद एतदधिकरणसिद्धान्ते [उच्यत] इत्यापवादिकी संगतिः । **वचनात्त्वयथार्थमैन्द्री स्यात् ॥** ऐन्द्री ऋक् [द्वि]तीया तृतीयावचनात् गार्हपत्ये विनियुक्ता यतः, अतः अयथार्था इन्द्ररूपमुख्यार्थशून्या स्यादिति सूत्रार्थः । **गुणाद्वाप्यभिधानं स्यात्संबन्धस्याशास्त्रहेतुत्वात् ॥** क्रतूपकारकत्वगुणादिन्द्रशब्दो गार्हपत्यवाची स्यात् । न हि शास्त्रमैन्द्रीति इन्द्रशब्दस्य गार्हपत्येन शक्तिलक्षणसंबन्धं कथयितुमलम्, शब्दार्थसंबन्धरूपशक्तेः शास्त्राधीनत्वाभावात्, अनादित्वादिति यावदिति सूत्रार्थः । 'कदाचन स्तरीरसि नेन्द्र सश्चसि दाशुषे' इति मन्त्रस्यायमर्थः— हे इन्द्र त्वं कदाचन कदाचिदपि स्तरीः हिंसकः नासि,

दाशुषे त्वामुद्दिश्य हविर्दात्रे यजमानाय सश्चसि संगच्छसीति । मुख्यसामर्थ्यो-ज्जीवनात्, शक्त्युज्जीवनात् । (जघन्येति ।) तद्धितापेक्षया चरमश्रुतेत्यर्थः । तदनुरोधेन, तद्धितश्रुत्युज्जीवितशक्त्यनुरोधेन । प्रतियोगित्वे, समीपस्थिति-रूपस्योपसर्गधात्वर्थघटकसामीप्यान्वयि यत्प्रतियोगित्वं तस्मिन् । (गुणभूतेति ।) द्वितीयापेक्षया गुणभूतेत्यर्थः । प्रातिपदिके, गार्हपत्यपदे । रूढत्वात्, गार्ह-पत्यपदरूढत्वात् । तस्य, अभिधानस्य । ('उपान्मन्त्रकरणे' इतीति ।) उपपूर्वकात्स्थाधातोर्मन्त्रकरणकाभिधानरूपार्थे वर्तमानादात्मनेपदं भवतीत्यर्थः । आत्मनेपदबलेन, उक्ताभिधानद्योतकात्समीपस्थित्यर्थकादुपपूर्वकात्स्थाधातोरात्म-नेपदविधानादिति व्याकरणसूत्रार्थ इत्यवलम्बनेन । (न विरोध इति ।) शब्देन बोधिताख्यातार्थं प्रति द्वयोः कर्मत्वे उद्देश्यानेकत्वनिमित्तकवाक्यभेदः स्यात्, न तु शब्दार्थे एकस्य कर्मत्वमपरस्यार्थिकार्थे इत्यङ्गीकारे इत्यर्थः । प्रपञ्चितम्, अकर्मकस्यापि वैवक्षिकं सकर्मकत्वमिति प्रपञ्चितम् । अतस्तस्येत्येतद्घटक-तस्येत्यस्य तद्धितस्येत्यर्थः । (आत्मनेपदविरोधेनेति ।) द्योतकाद्धातोरुपपूर्व-कादात्मनेपदमित्युक्तावपि केन द्योत्यतेऽभिधानमित्याकाङ्क्षायां धातुपदाभिन्नस्य द्योतकत्वकल्पनामपेक्ष्य अवश्यक्लृप्तधातुपदस्यैव लक्षणावृत्त्या मन्त्रकरणकाभि-धायकत्वमाश्रित्य तदुत्तरमात्मनेपदविधानमिति रीत्या उक्ताभिधानार्थकधातू-त्तरमात्मनेपदाविरोधेनेत्यर्थः । तस्यैव, गार्हपत्यस्यैव । ब्राह्मणानुरोधेन, 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इति ब्राह्मणानुरोधेन ॥ २ ॥

मन्त्रविनियोगप्रसङ्गान्मन्त्रान्तरविनियोगं विचारयति । **तथाह्वान-मिति चेत्** ॥ आह्वानम् आह्वानमन्त्रः तथा ऐन्द्रीमन्त्रवद्गौणीवृत्त्या विनि-युक्तः स्यादिति पूर्वपक्षसूत्रार्थः । **गुणाभावात्** ॥ मन्त्रगतस्य 'एहि' इति शब्दस्य अवहन्तौ इन्द्रशब्दस्य गार्हपत्य इव सिंहशब्दस्य माणवक इव गुणा-भावान्न गौण्या अवहन्तिपरत्वमिति सिद्धान्तसूत्रार्थः । तस्य, आह्वानस्य । तस्येत्यस्याभावप्रतीतेरित्यत्रान्वयः । (वचनानुसारेणेति ।) उक्तवचनस्थैवकारेण पत्न्या अनाहूतत्वावगमादिति भावः । अस्मिन्वाक्ये, 'हविष्कृदेहि—' इति

वाक्ये । पत्नीवाक्ये च 'पत्न्येव हविष्कृत्—' इति वाक्ये च । गुणादेव, पत्नीरूपगुणादेव । अनेन वाक्येन, 'हविष्कृदेहि—' इति वाक्येन । गौण एव, 'हविष्कृदेहि—' इतिमन्त्रघटक—'एहि'—इतिपदगौणार्थेऽवघात एव । अयं मन्त्रः, 'हविष्कृदेहि—' इति मन्त्रः । ननु हे हविष्कृत् अवघात त्वमेहि इति मन्त्रार्थस्य पूर्वपक्षे वक्तव्यतया तादृशार्थकमन्त्रेण त्रिरवघ्नन्नध्वर्युर्भवेदिति विधिवाक्यार्थः संपद्यते । तस्मिन्विधिवाक्ये आह्वयतिपदेन चेतनाभिमुखीकरणरूपसंबोधनफलकसंबोधनविभक्त्यन्तपदत्वंपदमध्यमपुरुषोच्चारणरूपत्रयघटित—'अवघात त्वमेहि'—इति शब्दोच्चारणरूपाह्वानार्थकेन बोधितशक्यार्थस्यासंभावितत्वाद्गौणार्थस्य चाभावादाह्वयतिपदमनुपपन्नमित्यत आह— आह्वयतिश्च 'तदाचष्टे' इत्येवमित्यर्थे इति । गौण इति शेषः । तदयमत्र पदवाक्यार्थः— तत् 'एहि' इति मन्त्रस्वरूपं चेतनाभिमुखीकरणरूपफलमनुद्दिश्याध्वर्युराचष्टे कथयतीत्येवंरूपेऽध्वर्युकर्तृकमन्त्रोच्चारणाख्यगौणार्थे ह्वयतिराह्वयतिपदं गौणमिति । मान्त्रवर्णिकेत्यादेर्नियमेन प्राप्तत्वादित्यन्तस्य पत्न्येवेत्यादिना न त्वाहूतेत्यन्तेनोक्तेऽर्थे हेतुबोधकत्वम् । तदभावबोधकम्, आह्वानाभावबोधकम् ॥ ३ ॥

बाधकाभावे मुख्यार्थे विनियोगो मन्त्रस्येत्युक्तार्थमतिदिशतीत्यातिदेशिकी संगतिः । **तथोत्थानविसर्जने** ॥ उत्थानविसर्जने तथा मन्त्रनिरूपितोद्देश्येन भवत इति सूत्रार्थः । 'अग्नीदग्नीन्विहरेति' इतीतिकरणशिरस्कतया ब्राह्मणवाक्यनिर्दिष्टमन्त्रस्यायमर्थः— हे अग्नीत् हे आग्नीध्र अग्नीन् गार्हपत्यादीन् विहर वर्धयेति । 'व्रतं कृणुत—' इति मन्त्रस्यार्थः स्पष्टः । प्रणीताः, प्रणीयन्त इति प्रणीताः प्रणयनकर्मीभूता आपः । प्रणेष्यन्, प्रणयनं करिष्यन् । हविष्कृता, 'हविष्कृदेहि' इति मन्त्रेण । पूर्ववत्, हविष्कृदेहीति त्रिरवघ्नन्नाह्वयतीति पूर्वाधिकरणविषयवाक्यवत् । मन्त्राणाम्, 'अग्नीदग्नीन्विहर' इत्यादिमन्त्राणाम् । मुख्ये, अग्निविहरणे व्रतकरणे च । प्रबलस्यापि, मन्त्रलिङ्गापेक्षया प्रबलस्यापि । श्रुत्यैव, शक्त्यैव । (अन्वयोपपत्तेरिति ।) शतृप्रत्ययस्य लडादेशभूतस्य प्रयोज्यप्रयोजकभावार्थकस्य कालिक-

संबन्धेनोपलक्षणार्थत्वात्कालिकसंबन्धेनोपलक्षणत्वस्य कालिकसंबन्धावच्छिन्नव्या-प्यत्वरूपत्वात् उक्तव्याप्यत्वस्य निरूपकतासंबन्धेन विहरणमन्त्रानुवचनेनान्वयो-पपत्तेरित्यर्थः । स्वरूपलक्षणार्थमात्रपरत्वात्, मन्त्रस्वरूपार्थकत्वात् । तस्य च कालिकसंबन्धेन वाग्विसर्गभावनान्वयाद्विवक्षितसिद्धिरिति भावः । इत्थंभूत-लक्षणार्थताम्, 'जटाभिस्तापसः' इतिवत्कालविशेषार्थताम् । तथा च तस्मिन् 'हविष्कृत्' इति प्रातिपदिकार्थस्य हविष्कृन्मन्त्रस्यान्वये हविष्कृन्मन्त्रकाल-सिद्धिरिति भावः । तत्तद्वाक्ययोः, द्वितीयतृतीयवाक्ययोः । सोऽपि, मन्त्र-पाठकाले वाग्विसर्गः कर्तव्य इत्यर्थोऽपि । तत्र, उक्तवाक्यद्वये ॥ ४ ॥

पूर्वाधिकरणे कालविधिवदत्रापि सूक्तवाककालविधिः स्यादिति दृष्टान्त-संगतिः । **सूक्तवाके च कालविधिः परार्थत्वात्** ॥ सूक्तवाकवाक्ये इत्थंभूतलक्षणरूपकालविशेषार्थतृतीयाघटितेन सूक्तवाकेनेति पदेन प्रस्तरप्रहर-णोद्देशेन कालविधिः प्रस्तरप्रहरणापेक्षया परो योऽग्न्यादिः तत्प्रकाशनार्थत्वा-त्सूक्तवाकमन्त्रस्येति पूर्वपक्षसूत्रार्थः । **उपदेशो वा याज्याशब्दो हि नाकस्मात्** ॥ 'सूक्तवाकेन—' इत्यादिः प्रहरणं प्रति सूक्तवाकस्याङ्गत्व-व्यपदेशः हि यस्मात् 'सूक्तवाक एव याज्या—' इति सूक्तवाकस्य याज्यात्व-समर्पकः शब्दः तस्मात् सूक्तवाकस्य प्रहरतिलक्षितयागसाधनत्वम्; न हि यागसाधनत्वं विना अकस्माद्याज्याशब्दस्तस्मिन्युक्त इति सिद्धान्तसूत्रार्थः । (इष्टदेवतेति ।) अग्न्यादिरूपप्रधानयागोपयुक्तदेवतेत्यर्थः । (उपयुक्तप्रस्तरेति ।) हविरासादनोपयुक्तप्रस्तरेत्यर्थः । (कृतार्थत्वादिति ।) प्रहरणस्य प्रस्तरप्रति-पत्तित्वेनाकाङ्क्षानाकाङ्क्षत्वान्मन्त्रस्य च देवताप्रकाशनेन कृतप्रयोजनत्वेनाकाङ्क्षाना-काङ्क्षत्वात्परस्पराङ्गाङ्गिभावो न भवतीति भावः । कालार्थः संबन्धः, कालोप-स्थापकः पदसमभिव्याहारः । इत्थंभूतलक्षणत्वपरा, सूक्तवाकमन्त्रोच्चारण-रूपस्य प्रस्तरप्रहरणव्याप्यस्य यो व्याप्यतावच्छेदकः कालिकः संबन्धः तत्परा । प्रहरणोपलक्षणत्वेन, प्रहरणव्याप्यत्वेन । तस्यापि, इत्थंभूतलक्षणस्यापि । आनुशासनिकत्वेन, 'इत्थंभूतलक्षणे' इत्यनुशासनसिद्धत्वेन । श्रुत्या, तृती-

याश्रुत्या । (आश्रयिकर्मरूप इति ।) प्रस्तरप्रतिपत्तित्वेन प्रस्तरसंस्कारत्वादाश्रयिकर्मशब्दितसंस्कारकर्मरूप इत्यर्थः । (होमलक्षक इति ।) देवताप्रकाशकसूक्तवाकमन्त्रस्याङ्गत्वेन तत्प्रतिपाद्यदेवतायाः अङ्गिनि प्रस्तरप्रहरणेऽन्वयसिद्ध्यर्थं प्रहरतिपदं यागलक्षकमिति भावः । अत एव, प्रस्तरप्रहरणस्य यागत्वादेव । (लिङ्गं संगच्छत इति ।) सूक्तवाकमन्त्रस्य यागं प्रति करणमन्त्रत्वरूपं याज्यात्वं संगतमित्यर्थः । मुख्यसामर्थ्यस्य, शक्त्या देवताप्रकाशनानुकूलत्वस्य । (प्रहरणेऽपि तदुपपत्तेरिति ।) उक्तरीत्या प्रहरणस्य यागतया तस्मिन्सूक्तवाकोक्तदेवतासंबन्धोपपत्तेरित्यर्थः ॥ ९ ॥

सूक्तवाकप्रसङ्गात्तद्विषयकमन्यच्चिन्त्यत इति प्रसङ्गसंगतिः । **कृत्स्नोपदेशादुभयत्र सर्ववचनम्** ॥ सूक्तवाकप्रातिपदिकस्य कृत्स्नसूक्तवाक एवोपदेशात् प्रयोगात् दर्शे पूर्णमासे च कृत्स्नः सूक्तवाकः प्रयोक्तव्य इति पूर्वपक्षसूत्रार्थः । **यथार्थं वा शेषभूतसंस्कारात्** ॥ यथार्थं दर्शे पूर्णमासे च या या देवता तत्तद्देवतारूपार्थमनतिक्रम्य विभज्य विभज्य सूक्तवाकः अंशतः प्रयोक्तव्यः, यागशेषभूतदेवताया विभक्ततत्तदंशमात्रेणैव स्मरणरूपसंस्कारसिद्धेरिति सिद्धान्तसूत्रार्थः । श्रुत्या लिङ्गोपष्टब्धया, देवताप्रकाशनसामर्थ्यरूपलिङ्गसहितया तृतीयाश्रुत्या । (न चात्राविरोधोऽपीति ।) उक्तप्रकाशनार्थत्वे विरोधाभावोऽपीति न चेत्यर्थः । (श्रुतिविरोधापत्तेरिति ।) सूक्तवाकप्रातिपदिकस्य कृत्स्नसूक्तवाके शक्तेरुक्तप्रातिपदिकोत्तरतृतीयायास्तद्गतकरणत्वशक्तेश्च विरोधापत्तेरित्यर्थः । असौ, सूक्तवाकशब्दः । (आनुषङ्गिकं फलमिति ।) आनुषङ्गिकफलस्याप्रयोजकतया न तदर्थं देवताप्रकाशकभागस्य विभज्योच्चारणं युक्तमिति भावः । (प्रयोजकमिति ।) यदिच्छाधीनेच्छया यत्क्रियते तत्तत्प्रति प्रयोजकमित्यर्थः । श्रुत्या लिङ्गस्य बाधे, प्रातिपदिकश्रुतिसनाथया तृतीयाश्रुत्या देवताप्रकाशनसामर्थ्यरूपलिङ्गाधीनविनियोगस्य बाधे । प्रहरतिलक्ष्येत्यादेरापत्तेरित्यन्तस्य देवताप्रतिपादकमन्त्रशब्दोच्चारणरूपोद्देशविशिष्टप्रक्षेपाङ्गकत्यागरूपलक्ष्यार्थयागे घटको य उद्देशांशः तस्य लिङ्गाद्देवतास्मरणा-

रूपदृष्टप्रयोजनपरत्वाभावेऽदृष्टप्रयोजनकल्पनापत्तिरित्याशयः । लाभार्थमित्यनन्तरमुद्देशांशस्येति पूरणीयम् । प्रयुक्तः, प्रयोजितः । मन्त्रविशेषे, मन्त्रघटकावयवविशेषे । अतश्च, सूक्तवाकपदस्य देवताप्रकाशकभागे योगरूढत्वाच्च । देवतापदसमुदाययुक्ते, तत्तद्देवतावाचिपदसमुदायतद्भिन्नसमुदायोभयघटिते ॥ ६ ॥

मन्त्रप्रसङ्गादन्योऽपि मन्त्रो विचार्यत इति प्रसङ्गसंगतिः । **लिङ्गक्रमसमाख्यानात्काम्ययुक्तं समाम्नानम्** ॥ तत्तदिष्टिलिङ्गानुसारिक्रमात्तत्तदिष्टिलिङ्गानुसारिसमाख्यानाच्च काम्येष्टियुक्तं मन्त्रसमाम्नानम्, न तु नित्यकाम्योभयेष्टियुक्तमिति सूत्रार्थः । इन्द्राग्निस्वरूपे, इन्द्रत्वाग्नित्वादिना मन्त्रेण बोध्यमाने इन्द्राग्न्यादिस्वरूपे । (लक्षणापत्तेरिति ।) मन्त्रघटकेन्द्राग्न्यादिपदानामित्यादिः । सर्वार्थत्वम्, नित्यकाम्येष्ट्यर्थत्वम् । प्रयोजनाकाङ्क्षायाश्चेत्यस्य अभावादित्यत्रान्वयः । (तत्तदाकाङ्क्षेति ।) तत्तन्मन्त्रगताकाङ्क्षेत्यर्थः । क्रतुसंबन्धे, क्रत्वङ्गत्वे । द्वारविशेष एव, तत्तत्क्रत्वीयदेवतास्मरणरूपद्वारविशेष एव । तेषाम्, प्रकरणादीनाम् । तेन, वाचःस्तोमे विनियोजकेन । प्रमाणद्वयस्य, प्रकरणलिङ्गोभयस्य । एकविषयत्वात्, पूषानुमन्त्रणमन्त्रविषयकत्वात् । अत्रापि वाचःस्तोमविनियोजकवाक्यस्य तत्तत्प्रकरणादेश्च तत्तन्मन्त्ररूपैकविषयकत्वात्प्रबलेन लिङ्गेन पूषानुमन्त्रणमन्त्रविषये प्रकरणबाधवद्वाचःस्तोमविनियोजकवाक्येन प्रबलेन तत्तन्मन्त्रविषयकदुर्बलप्रकरणादेर्बाधः स्यादित्यतो हेत्वन्तरमाह— मन्त्रप्रयोजनाकाङ्क्षावेलायां प्रबलप्रमाणस्यानुपस्थितत्वाच्चेति । अन्यत्र, नित्येष्टिषु । तत्त्वेन, जुहूत्वेन । अत एव, आकाङ्क्षोत्थानानुपपत्तेरेव । स्वारसिकीत्यादेर्विनियोग इत्यन्तस्य अर्थज्ञानं विनानुष्ठानासंभवादनुष्ठानस्यार्थज्ञाने स्वारसिक्याकाङ्क्षा तादृशार्थज्ञानस्य सामान्यसंबन्धबोधकप्रमाणं विनाप्यनुष्ठानाङ्गत्वमुपनिषज्जन्यदेहादिव्यतिरिक्तात्मज्ञानं विना पारलौकिकफलककर्मानुष्ठानासंभवात् तादृशकर्मानुष्ठानस्योक्तात्मज्ञाने स्वारसिक्याकाङ्क्षा तादृशात्मज्ञानस्य सामान्यसंबन्धबोधकप्रमाणं विनापि कर्मानुष्ठानाङ्गत्वं

च स्वगतार्थानुमापकत्वरूपलिङ्गात्मकसामर्थ्यप्रयुक्तमिति भावः । तदुपपत्तेः, आकाङ्क्षोत्थानोपपत्तेः । (साप्तदश्यवदग्निदैवत्यकर्मेति ।) साप्तदश्यवच्च तत् अग्निदैवत्यकर्म चेति कर्मधारयसमासः । साप्तदश्यं सप्तदश सामिधेनीः । समाख्यया, याज्यानुवाक्याकाण्डमिति समाख्यया । (अन्यासामिति ।) अन्यासामिति शेषः ॥ ७ ॥

लिङ्गस्य सामान्यसंबन्धबोधकप्रमाणापेक्षत्वात्प्रकृतविषयत्वमुक्तं पूर्वाधिकरणे, श्रुतेस्तु स्वतः प्रबलतया तदनपेक्षत्वात्सर्वविषयत्वं स्यादिति प्रत्युदाहरणसंगतिः । **अधिकारेषु मन्त्रविधिरतदाख्येषु शिष्टत्वात्** ॥ अधिकारेषु प्रकरणेषु यो मन्त्रविधिः सः अतदाख्येषु, तेन प्रकरणेन आख्या आख्यानं बोधनं येषां ते तदाख्याः, न तदाख्या अतदाख्याः तेषु, प्रकरणज्ञाप्यभिन्नेष्वपीति यावत् । प्रवर्तेत; कुतः? मन्त्रप्रतिपादकाग्नेयीशब्दस्य प्रकरणस्थ इव तद्भिन्नेष्वप्यवयवार्थतः शिष्टत्वात् पर्यवसितत्वादिति पूर्वपक्षसूत्रार्थः । **तदाख्यो वा प्रकरणोपपत्तिभ्याम्** ॥ तदाख्यः प्रकरणेनाख्यायमानो मन्त्र आग्नेयीपदार्थः स्यात् तस्य प्रकरणगृहीतत्वात्, 'आग्नेयी' इति तद्धितस्य 'सास्य देवता' इति सर्वनामार्थविहितस्य संनिहितमन्त्रग्राहित्वरूपोपपत्तिसत्त्वाच्चेति सिद्धान्तसूत्रार्थः । (विशिष्टविध्युत्तरेति ।) अग्निदैवत्यमन्त्रविशिष्टाग्नीध्रोपस्थानविध्युत्तरेत्यर्थः । विशेषणविधिना, अग्निदैवत्यमन्त्रेणाग्नीध्रोपस्थानं भावयेदिति कल्पितविधिना । प्रकरणानुप्रवेशोऽपि, प्रकृतापूर्वसाधनत्वनिवेशोऽपि (तद्वाचित्वेऽपीति ।) 'सास्य देवता' इति सर्वनामार्थे विहितत्वादिति शेषः । तत्र, ब्रह्मौदनभोजनोद्देशेन विनियोगभङ्ग्याचतुष्ट्वसंख्यावच्छिन्नब्राह्मणविधौ । अपूर्वार्थत्वस्य, स्तोत्रजन्यापूर्वार्थत्वस्य । आग्नीध्रोपस्थानसंबन्धकरणे, आग्नीध्रसमीपदेशस्थितिसंबन्धकरणे । उभयकरणे, उपस्थानापूर्वसाधनत्वस्योपस्थानद्वारकत्वस्य च कल्पने । द्वारत्वे, द्वारत्वाख्येऽवान्तरेऽपूर्वसाधनत्वाकारेण विना केवलोपस्थानत्वरूपेणाग्नेयीं प्रत्युद्देश्यत्वे । तत्कार्यापन्नेषु, आग्नीध्रोपस्थानकार्यापन्नेषु । ऊहाद्यनापत्तेः, आग्नेयीप्रयो-

प्रकृतावच्छेदकस्योपस्थानत्वस्य तत्राभावेन तत्प्रयोज्याग्नेय्या एवाभावे आग्नेय्यामूहस्यैवानापत्तेः । (अपूर्वसाधनत्वलक्षणाया इति ।) लक्षणास्वीकारे प्रयोजकतावच्छेदकस्यैकजातीयापूर्वस्य तत्रापि सत्त्वात्प्रयोज्यातिदेशे तत्रोह-सिद्धिरिति भावः । प्रकृतविषयेऽपि, आग्नीध्रोपस्थानरूपविषयेऽपि । (वाक्या-न्तरकल्पनयेति ।) आग्नीध्रोपस्थानेन प्रकृतापूर्वं भावयेदिति वाक्यकल्पनये-त्यर्थः । (अपूर्वार्थत्वबोध इति ।) 'आग्नेय्या—' इति वाक्ये उपस्थानपदे उद्देश्यसमर्पकेऽपूर्वसाधनत्वलक्षणा मास्त्विति भावः । तदनापत्तेः, अवघातादि-विधावुद्देश्यत्वानापत्तेः । लाघवात्, अपूर्वसाधनं यद्यत्तत्तदुद्देश्यत्वापेक्षया लाघ-वात् । लाघवादित्याग्नेय्या स्तुवीतेति प्रकृतानां स्तोत्रापूर्वसाधनत्वस्य क्लृप्त-तया कुत्र स्थित्वा स्तोत्रं कार्यमिति शङ्कायामाग्नीध्रवाक्येऽस्याग्नीध्रनामक-मण्डपे स्थित्वेति स्तोत्रदेशमात्रपर्यवसानेन लाघवमिति भावः । (उद्देश्यतेति ।) 'आग्नेय्या स्तुवीत' इत्यादाविति शेषः । (व्रीह्यादिवदिति ।) 'व्रीहीनवहन्ति' इत्यादाववघात इव । कार्यान्तरसंबन्धबोधकविधौ, अग्नेयीनां ज्योतिष्टोमप्रक-रणपाठकल्पिताग्नेयीभिः किंचित्कार्यद्वारा ज्योतिष्टोमापूर्वं भावयेदिति कार्य-संबन्धविधौ । तथापि, स्तोत्रापूर्वसाधनत्वस्य प्रकृतानां सिद्धावपि । ज्योतिष्टो-मापूर्वसाधनत्वं कथमित्याशङ्कायां स्तोत्रद्वारा तासां वाङ्नियमन्यायेन ज्योतिष्टो-मापूर्वसाधनत्वाभावेऽपि स्तोत्रभिन्नकार्यद्वारा तत्संभवात्प्रकृतनियमः संभवती-त्याह— संभवति चेत्यादिना । सः, प्रकृतनियमः । स्तोत्रोपस्थानभिन्नकार्यद्वारा ज्योतिष्टोमापूर्वार्थत्वं प्रकृतानामस्तीत्यत्र प्रमाणमाह— पार्थक्येन ज्योतिष्टोम-प्रकरणे पाठादेवेति । तथा च प्रकृतानां प्रकरणपाठाज्ज्योतिष्टोमापूर्वार्थत्वस्य क्लृप्तत्वाद्द्वाररूपकार्यसिद्धावपि कार्यविशेषरूपोपस्थानार्थत्वम्, अप्रकृतानां तु-क्षममनेन वक्तव्यम् उपस्थानस्यानापत्तेऽपि विजातीयापूर्वसाधनकार्यत्वसत्त्वादूहा-पत्तिरिति महाभिप्रायः । (आहवनीयादावप्राप्तत्वादिति ।) होमापूर्वसंबन्ध-स्याहवनीयादौ क्लृप्तत्वेऽपि स्तोत्रे आहवनीयस्योपयोगानुक्तेः स्तोत्रापूर्वसंबन्धो नाहवनीये क्लृप्त इति भावः । न तन्नियमः, न प्रकृताहवनीयादिनियमः ।

(विना वचनमिति ।) 'उपनिधाय' इति स्तोत्रसमीपदेशेऽभ्युपनिधानस्य विहितत्वेऽपीत्यादिः ॥ ८ ॥

अपूर्वसाधनत्वस्य क्लृप्तत्वादाग्नेयीपदेन प्रकृतानामेव ग्रहणमित्युक्तम्, तद्वदत्रापि भक्षमन्त्र इति समाख्याया: कृत्स्नानुवाक एव क्लृप्तत्वात्कृत्स्नानुवाकस्य भक्षणे विनियुज्यमानता स्यादिति दृष्टान्तसंगतिः । **लिङ्गसमाख्यानाभ्यां भक्षार्थतानुवाकस्य** ॥ भक्षप्रतिपादकत्वलिङ्गेन भक्षानुवाक इति समाख्यया च कृत्स्नानुवाकस्यैव भक्षणविनियोज्यत्वमिति पूर्वपक्षसूत्रार्थः । **तस्य रूपोपदेशाभ्यामपकर्षोऽर्थस्य चोदितत्वात्** ॥ तस्य अनुवाकस्य रूपेण भक्षावेक्षणादिस्वरूपभिन्नभिन्नार्थप्रकाशनसामर्थ्यरूपलिङ्गेन उपदेशेन अयमंशो भक्षस्यायं सम्यग्जरणस्यायमवेक्षणस्येति विभज्यैवाध्यापकोपदेशेन च भक्षप्रतिपादकांशादंशान्तरस्य भक्षरूपार्थादपकर्षः असंबन्धः कार्यः, तत्तदंशार्थस्य तत्तदंशसामर्थ्यकल्पितविधिरूपचोदनायामुद्देश्यत्वस्य चोदितत्वादिति सिद्धान्तसूत्रार्थः । अपूर्वप्रयोजकत्वस्यापि, अपूर्वजनकभक्षजनकत्वस्यापि । अवान्तरप्रकरणेन, भक्षावान्तरप्रकरणेन । अपूर्वसंबन्धे, अपूर्वसाधनभक्षसंबन्धे । ग्रहणादिविधिकल्पनया, तत्तन्मन्त्रविशिष्टग्रहणादिनेष्टं भावयेदिति विधिकल्पनया । तत्प्राप्त्युपपत्तेः, अपूर्वसाधनग्रहणादिप्राप्त्युपपत्तेः । तदर्थत्वेनैव, विशिष्टविध्यन्यथानुपपत्तिकल्पितविशेषणविधिना अमुकांशेन ग्रहणं भावयेदित्याकारेण सिद्धग्रहणोद्देश्यकत्वेनैव । (वमनव्यतिरेकेति ।) वमनरूपो यो व्यतिरेकोऽतिक्रमः स इत्यर्थः । भक्षोपयोगिता, भक्षापूर्वोपयोगिता । हे भक्ष त्वम् एहि आगत्य मा मां विश प्रविशेति मन्त्रार्थः ॥ ९ ॥

ग्रहणादीनामनुष्ठानयोग्यत्वात्तत्र मन्त्रविनियोगो युक्तः, तृप्तेस्तदयोग्यत्वान्न तत्र मन्त्रविनियोगो युक्त इति सिद्धान्तस्यास्मिन्नधिकरणे वक्ष्यमाणस्यादस्य पूर्वेणापवादिकी संगतिः । **गुणाभिधानान्मन्द्रादिरेकमन्त्रः स्यात्तयोरेकार्थसंयोगात्** ॥ गुणाभिधानात् अनुष्ठानायोग्यतृप्तिगुणाभिधानात् मन्द्रादिस्तृप्यत्वित्यन्तः एकमन्त्रः भक्षमन्त्रेण एकमन्त्रः स्यात्, तयोः

भक्षमन्त्रतृप्तिमन्त्रयोर्विभिस्तुल्यर्थत्वेन एकस्मिन्नर्थे संयोगादिति सूत्रार्थः । मन्द्राभिभूः, मन्द्रस्वरेणाभिभवतीति मन्द्राभिभूः । अत एव, 'अल्पं भक्षयति' इत्यल्पभक्षणबोधनादेव । (स्वर्गवदिति ।) 'अगन्म—' इति मन्त्रेणेति शेषः ॥ १० ॥

भक्षमन्त्रविनियोगप्रसङ्गेन तद्विषयविनियोगान्तरं चिन्त्यत इति प्रसङ्गसंगतिः । **लिङ्गविशेषनिर्देशात्समानविधानेष्वनैन्द्राणाममन्त्रत्वम्** ॥ इन्द्रपीत इति लिङ्गस्य ऐन्द्राभ्यासविषयकस्य भक्षमन्त्रे निर्देशात् समानविधानेषु प्रकृतिविकृतिभावशून्येषु ऐन्द्रानैन्द्राभ्यासेषु घटकानैन्द्राभ्यासानां संबन्धिभक्षणस्यास्यामन्त्रत्वमिति पूर्वपक्षसूत्रार्थः । **यथादैवतं वा तत्प्रकृतित्वं हि दर्शयति** ॥ यथादैवतम् अनैन्द्रेष्वप्यभ्यासेषु इन्द्रपीत इति स्थाने इन्द्राग्निपीतस्येति रीत्या ऊहः कार्यः, हि यस्मात् अनैन्द्राभ्यासान्प्रति ऐन्द्राभ्यासस्य प्रकृतित्वम् ऐन्द्राभ्यासे अपेक्षितसर्वधर्मसमर्पकवाक्यदर्शनादवगम्यते, अनैन्द्राणां च धर्मसाकाङ्क्षतया विकृतित्वमिति सिद्धान्तसूत्रार्थः । (पदद्वयलक्षणापादकेति ।) 'अनेकमन्यपदार्थे' इति सूत्रे अनेकपदेनैकपदभिन्नस्य पदद्वयादेर्बोधनेन पदद्वयादेरेवान्यपदार्थे लक्षणाया उक्तसूत्ररीत्यावश्यवक्तव्यतया एकपदस्यापरपदार्थे लक्षणापरपदं तात्पर्यग्राहकमित्युक्तौ सूत्रे अनेकपदस्यान्यपदार्थे वृत्तिकथनासांगत्यापत्त्या च पदद्वयलक्षणापादको बहुव्रीहिरित्यर्थः । (लक्षणाननुगतेति ।) तृतीयाव्यधिकरणबोधकसूत्राभावेन सूत्रात्मकशास्त्राननुशिष्टेत्यर्थः । लक्ष्यते ज्ञाप्यतेऽनेनेति लक्षणं ज्ञापकं सूत्ररूपं प्रमाणम् । लक्षणानुगतस्य, बहुव्रीहितत्पुरुषसूत्रानुशिष्टस्य । ननु देवतायाः स्वीकारपूर्वकपानासंभवादिन्द्रेण पीत इति तत्पुरुषार्थो बाधित इत्यत आह— विधते चेत्यादि । संबन्धविशेषरूपः, त्यज्यमानद्रव्योद्देश्यत्वरूपः । (स्वीकार इति ।) उक्तस्वीकार एव देवतायाः पानमिति भावः । स्वरादेव, अन्तोदात्तत्वस्वरादेव । तद्वत्, स्थूलपृषतीत्यत्रेव । इह, इन्द्रपीतपदे । स्वरस्यैव, अन्तोदात्तस्वरस्यैव । बाध्यत्वात्, बहुव्रीहिसमासाप्रयोजकत्वात् । ('व्रीहीणां मेध—' इतिवदिति ।)

'व्रीहीणाम्—' इति मन्त्रस्य यवप्रयोगेऽप्रवृत्त्या यवप्रयोगस्यामन्त्रकत्वमिति-त्यर्थः। मानग्रहणमन्त्ररूपाङ्गानुरोधेन सर्वप्रधानाभ्याससाधारणानां प्राकरणिकानां धर्माणां कथमैन्द्रप्रदानमात्रविषयतया संकोच इत्यत आह— भवति चाङ्गवशेनापीत्यादि ॥ ११ ॥

ऊहप्रसङ्गादूहविशेषश्चिन्त्यत इति प्रसङ्गसंगतिः। **पुनरुन्नीतेषु सर्वेषामुपलक्षणं द्विशेषत्वात्** ॥ पुनरुन्नीतसोमरसयागोत्तरसोमशेषभक्षणमन्त्रे सर्वेषामुन्नयनात्प्राक्कालीनपूर्वप्रदानशेषभूता ये देवास्तेषां सर्वेषामुपलक्षणमूहः भक्ष्यमाणसोमरसस्य द्विशेषत्वात् उन्नयनपूर्वकालीनोन्नयनोत्तरकालीनप्रदानद्वयशेषत्वादिति सूत्रार्थः। (सवनमुखीयेष्विति।) सवनसंबन्धिनो ये चमसास्तेषां मध्ये ये प्रथममिन्द्राय हूयन्ते मैत्रावरुणब्राह्मणाच्छंसिनेष्टृपोत्राग्नीध्राख्यहोतृकाणां चमसाः तेष्वित्यर्थः। (अभक्षितेष्विति।) सकृदिन्द्राय हुतेष्विति शेषः। (अभ्युन्नीयेति।) द्रोणकलशादिति शेषः। पूर्वशेषस्य, पूर्वप्रदानशेषस्य। करिष्यमाणकर्मार्थत्वप्रतीतेरित्यनन्तरम् उन्नीतस्यैव करिष्यमाणप्रदानीयदेवतासंबन्धः न संसृष्टस्येति पूरणीयम्। एतदर्थत्वे, करिष्यमाणकर्मार्थत्वे ॥ १२ ॥

पूर्ववदत्रापि पूर्वदेवतासंबन्धानपायात्पूर्वदेवतोपलक्षणं स्यादिति दृष्टान्तसंगतिः। **पात्नीवते तु पूर्ववत्** ॥ पात्नीवते पत्नीवद्देवतासंबन्धिसोमरसे भक्ष्यमाणे पूर्ववत् पूर्वाधिकरणरीत्या पूर्वप्रदानदेवतोपलक्षणीयेति पूर्वपक्षसूत्रार्थः। **ग्रहणाद्वापनीतं स्यात्** ॥ आग्रयणस्थालीतः पात्नीवतार्थं ग्रहणात् गृहीते च पूर्वदेवतासंबन्धित्वमपनीतं स्यादिति सिद्धान्तसूत्रार्थः। अस्मिन्, पात्नीवते। द्विदेवत्याः, द्विदेवत्यसोमरससंबन्धिदेवताः। अस्मिन्विकृतियागे पत्नीवद्देवतासंबन्धवद्द्विदैवत्यदेवतासंबन्धाद्भूतपूर्वगतिमाश्रित्योपलक्षणं स्यादित्यत आह— भूतपूर्वगत्येति ॥ १३ ॥

पूर्वत्रेन्द्रवाय्वादीनां देवतात्वाभावादनुपलक्षणेऽपि अत्र त्वष्टुरपि देवतात्वादुपलक्षणं स्यादिति प्रत्युदाहरणसंगतिः। **त्वष्टारं तूपलक्षयेत्पानात्** ॥ पूर्वपक्षसूत्रं स्पष्टार्थम्। **अतुल्यत्वात्तु नैवं स्यात्** ॥ त्वष्टुः

सहभावमात्रं न पानम्, पत्नीवतस्तु पानम्, अतस्तयोरतुल्यत्वात्त्वष्टुर्नोप-लक्षणमिति सिद्धान्तसूत्रार्थः । अग्नाइ अग्ने हे पत्नीवन् त्वं त्वष्ट्रा देवेन सजूः साकं सोमं पिबेति मन्त्रार्थः ॥ १४ ॥

पूर्वाधिकरणे त्वष्टुः पानासंभवादनुपलक्षणीयत्वमुक्तम्, अत्र पत्नी-वतां पानोक्तेरुपलक्षणं स्यादिति प्रत्युदाहरणसंगतिः । **त्रिंशच्च परार्थ-त्वात्** ॥ त्रयस्त्रिंशद्देवा नोपलक्षणीयाः परार्थत्वात् परेण अग्निना दत्तो यःसोम-रसः तत्पानाधीनतृप्तिरूपार्थात्मकप्रयोजनवत्त्वात्, त्रयस्त्रिंशतां न तदुद्देशेन यजमानः किंचिदपि ददातीति यावदिति सूत्रार्थः । तस्मिन्नेव, पात्नीवत एव । हे अग्ने एभिस्त्रयस्त्रिंशता देवैः सह त्वं सरथं रथेन सहितमश्वं याहि, अथ वा नाना रथं नानाप्रकारं रथम् अर्वाक् आयाहि यस्मिन्रथे विभवः बृहत्काया अश्वाः सन्ति पत्नीवत्संज्ञकांस्त्रयस्त्रिंशतं देवान् अनुष्वधं सोमरसरूपान्नमनु आवह आशय मादयस्व चेति मन्त्रार्थः । (मन्यन्त इति ।) पूर्वपक्षिण इति शेषः ॥ १९ ॥

त्रयस्त्रिंशतां यजमानत्यक्तद्रव्योद्देश्यत्वरूपदेवतात्वाभावादनुपलक्षणमु-क्तम्, अत्र त्वनुवषट्कारदेवतायास्तत्सत्त्वादुपलक्षणं स्यादिति प्रत्युदाहरण-संगतिः । **अनुवषट्कारश्च कर्तृवत्** ॥ होत्रादिकर्तृवदनुवषट्कारदेवता नोपलक्षणीयेति सूत्रार्थः । उपलक्षणमित्यनन्तरं पूर्वपक्षिणो मन्यन्त इति पूर-णीयम् । कृत्स्नविधानत्वेन, उपदिष्टापेक्षितसर्वधर्मवत्त्वेन । (अतिदेशाकल्प-कत्वादिति ।) अतिदेशाधीनभक्षणाप्राप्तौ भक्षमन्त्र उपलक्षणाप्रसक्तिरिति भावः । 'व्रीहीणां मेध' इतिवत्, 'व्रीहीणाम्—' इति मन्त्रस्य विकृतिष्वतिदेशेन प्राप्तस्य व्रीहिपदस्थाने विकृतिद्रव्यवाचिपदोहेऽपि प्रकृतावुपदेशस्थले यव-प्रयोगे मन्त्राभाववदित्यर्थः । तत्कार्यापन्ना, प्राकृतकार्यापन्ना । (नानुवषट्कार-देवतेति ।) प्रकृतावङ्गदेवताया अङ्गदेवतात्वाद्भक्षणेऽनुपलक्षणात्प्रधानदेवताया एवोपलक्षणाच्च विकृतावपि तथेति भावः ॥ १६ ॥

ऊहमभ्युपगम्य योऽयमुपलक्षणानुपलक्षणविचारः कृतः स भवतु नाम,

ऊहस्त्वयुक्त इतीह विचारयिष्यमाणत्वेन पूर्वेणास्यापवादिकी संगतिः । **छन्दःप्रतिषेधस्तु सर्वगामित्वात्** ॥ सोमस्य सर्वगामित्वात् न तदभावप्रयुक्तोऽभ्यासान्तरे सोमादेरूहः ऐन्द्राभ्यासवदनैन्द्राभ्यासानामपि समानविधानत्वेन सोमद्रव्यमानग्रहणादिसर्वग्राहित्वाद्धर्मापेक्षाभावेनान्यप्रकृतिकत्वाभावादतिदेशस्य मन्त्रविषयेऽप्रसक्ततया नोहः, 'अनुष्टुप्छन्दस इति षोडशिनि नमति' इति वाक्यं नोहस्य गमकम्, षोडशिनः अतिरात्रे तृतीयसवनस्थत्वात्, जगतीच्छन्दस इति निवेशप्राप्तौ तादृशाच्छन्दःप्रतिषेधः छन्दोनिषेधकमुक्तवाक्यम्, अतो नोहसिद्धिरिति सूत्रार्थः । 'अनुष्टुप्छन्दस इति षोडशिनि—' इति वाक्यस्यायमर्थः— षोडशिनि अनुष्टुप्छन्दस इति नमति वर्तते जगतीच्छन्दस इति न वर्तत इति यावदिति अनुष्टुप्छन्दस इति पदं जगतीच्छन्दःस्थाने नोहितव्यमिति, तथा चास्य वाक्यस्यातिरात्रविषयत्वान्नाग्निष्टोमादावभ्यासान्तरेऽतिदेशगमकतेति । एकत्वात्, बह्वभ्यासात्मकस्य कर्मणः 'सोमेन यजेत' इत्येकविधिविहितत्वात् । (फलचमसवदिति ।) न्यग्रोधस्तिभिनीद्रव्यं फलचमसः; राजन्यविषये सोमस्थानापन्नत्वेन सोमसमानविधानत्वाभावात्सोमधर्मप्राप्तिरतिदेशेन फलचमसस्य, तद्वत्प्रकृतेऽसमानविधानसाधकाभावेन नोह इति भावः । तदुद्देश्यानाम्, मानग्रहणमन्त्राद्युद्देश्यानामभ्यासानाम् । (न तु मानाद्यपीति ।) वाक्यान्तरप्राप्तत्वादिति शेषः । (देवतान्तरस्याभिधानादिति ।) धनवत्त्वरूपस्योक्तशब्दप्रवृत्तिनिमित्तस्य देवतान्तरेषु सत्त्वादिति भावः । तयोरपि, मानग्रहणमन्त्रयोरपि ॥ १७ ॥

इन्द्रपीतभक्षणे इन्द्रपीतमन्त्रसंभवात्समन्त्रकभक्षणमित्युक्तम्, तद्वदिन्द्राग्निदैवत्याभ्यासीयसोमरसस्यापीन्द्रपीतत्वसंभवात्तद्भक्षणमप्युक्तमन्त्रयुक्तं स्यादिति दृष्टान्तसंगतिः । **ऐन्द्राग्ने तु लिङ्गभावात्स्यात्** ॥ ऐन्द्राग्नाभ्यासीयसोमभक्षणे इन्द्रपीतत्वलिङ्गसंभवात्समन्त्रकत्वं स्यादिति पूर्वपक्षसूत्रार्थः । **एकस्मिन्देवतान्तराद्विभागवत्** ॥ एकस्मिन् एकेनेन्द्रमात्रेण पीत एव सोमरसे उक्तमन्त्रसंबन्धः यतः इन्द्रमात्रपीतमिन्द्राग्निरूपदेवतान्तरपीताद्वि-

भागवत् भिन्नं तस्मादिति सिद्धान्तसूत्रार्थः । (लाघवेनेति ।) इन्द्राग्न्युभय-निरूपितस्वीकारस्यैकस्य कल्पने लाघवम् इन्द्रनिरूपितस्याग्निनिरूपितस्य च भिन्नभिन्नस्वीकारस्यैन्द्राग्नसोमरसे कल्पने गौरवमिति भावः ॥ १८ ॥

पूर्वाधिकरणे उभयपीते इन्द्रपीतपदं न प्रवर्तत इत्युक्तम्, तद्वदुभय-च्छन्दस्कसोमे गायत्रच्छन्दस इत्युक्तिरयुक्तेति दृष्टान्तसंगतिः । **छन्दश्च देवतावत्** ॥ गायत्रच्छन्दस इत्युक्तं गायत्रं छन्दः इन्द्रदेवतावत् नोभयच्छन्द-स्के भवतीति पूर्वपक्षसूत्रार्थः । **सर्वेषु वाभावादेकच्छन्दसः** ॥ सर्वेषु प्रकृतिगतेषु विकृतिगतेषु सोमरसेषु मध्ये एकस्मिन्नपि सोमरसे गायत्रीमात्र-रूपस्य एकच्छन्दसः अभावात् उभयच्छन्दस्केऽपि सोमरसे गायत्रच्छन्दस इति पदं वर्तत एवेति सिद्धान्तसूत्रार्थः । तत्रैव, 'इन्द्रपीत—' इति मन्त्र एव । अस्मिन्पूर्वपक्षे, सोमविशेषणत्वपूर्वपक्षे । (इन्द्रदेवत्यत्वप्रातःसवनादीना-मिति ।) उक्तमन्त्रप्रतिपादितानामिति शेषः । भूम्ना, संख्याधिक्येन । बहु-व्रीहिघटकगायत्रपदस्यार्थविशेषसाधनत्वविषये तच्छन्दोन्तरसाहित्ये सामर्थ्य-भङ्गापत्त्या न समासः स्यादिति न शङ्क्यमित्याह— नित्यसापेक्षत्वेनेति । (प्रत्ये-कमेव साधनत्वादिति ।) न व्यासज्यवृत्तिस्तोत्रपूर्वसाधनत्वम्, किं तु प्रत्येक-वृत्तिस्तोत्रापूर्वसाधनत्वमिति भावः ॥ १९ ॥

गायत्रच्छन्दस इति पदस्य विचारे कृते तत्समानाधिकरणत्वेन बुद्धि-स्थमिन्द्रपीतपदं विचार्यत इति प्रसङ्गसंगतिः । **सर्वेषां त्वैकमन्त्र्यमैति-शायनस्य भक्तिपानत्वात्सवनाधिकारो हि** ॥ सर्वेषामभ्यासा-नामैकमन्त्र्यम् उक्तैकमन्त्रवत्त्वमैतिशायनस्य मुनेराभमत भक्त्या स्वीकारवत्सो-मसंबन्धिसवनलक्षणया पानं पानबोधकं पीतपदं यत्र सवने तद्भक्तिपानं तत्त्वात् इन्द्रपीतपदं सवनपरं तत्संबन्धिसोमभक्षणे उक्तमन्त्रो लिङ्गादप्युपपन्न इत्यभि-प्रायः । कुत इन्द्रपीतपदं सवनपरमित्यत आह— सवनाधिकारो हीति । यस्मा-त्सवनस्य प्रकरणं तस्मादिति सूत्रार्थः । लक्षणया सोमसंबन्धिसवनपरत्वमिन्द्र-पदस्येति शेषः । पीतपदमर्शआद्यजन्तलक्षणां विनैव पीतसंबन्धिसवनपरम् ।

तत्पुरुषपक्ष इति चासिद्धमेव । इयम्, पीतपदलक्षणा । निर्णयः, सवनरूपान्यपदार्थनिर्णयः । ('वाहिताग्न्यादिषु' इति सूत्रेणेति ।) तत्सूत्रे 'अग्न्याहितः' इति निर्देशवत् 'इन्द्रपीतः' इति निर्देशोपपत्तिरिति भावः । अवयवस्वीकारस्य, त्यक्तस्वीकृतहुताहुतसमुदायघटकस्य भक्ष्यमाणावयवमात्रस्य । अवयवि, उक्तसमुदायरूपावयवि । तस्याम्, सोमसंबन्धिसवनलक्षणायाम् । (प्रमाणत्वादिति ।) सवनत्रित्वात्त्रिः पाठः सवनत्रयपरत्वे प्रमाणमिति भावः । विभागोऽपि, उक्तभक्षमन्त्रस्य तत्तत्सवनसंबन्धिसोमभक्षणविनियोगोपयोग्यंशविभागोऽपि ॥ २० ॥

इति भाट्टकल्पतर्वभिधाया भाट्टदीपिकाव्याख्याया तृतीयाध्यायस्य

## द्वितीयः पादः ।

## तृतीयः पादः ।

लिङ्गमुपजीव्य वाक्यस्य विनियोजकत्वादुपजीव्योपजीवकभावः पूर्वपादेनास्य वाक्यपादस्य संगतिः । अस्मिन्पादे वाक्यप्रकरणक्रमादिनिरूपणेऽपि वाक्यनिरूपणस्य प्राथमिकत्वाद्वाक्यपाद इति व्यपदेशः । यथा इन्द्रपीतशब्दस्य प्रकरणवशात्सवनसामान्यवृत्तित्वमुक्तं तद्वदृगादिशब्दस्य शक्तिवशादृक्सामान्यवृत्तित्वमिति पूर्वाधिकरणेन दृष्टान्तसंगतिः । **श्रुतेर्जाताधिकारः स्यात् ॥** 'उच्चैर्ऋचा क्रियते' इत्यत्र ऋक्शब्दो जाताधिकार ऋक्त्वजात्यवलम्बनः स्यात् तत्र तस्य शक्तेरिति पूर्वपक्षसूत्रार्थः । **वेदो वा प्रायदर्शनात् ॥** ऋग्वेद ऋक्शब्दार्थः न ऋक्त्वावच्छिन्नः; कुतः? प्रायदर्शनात् उपक्रमे वेदशब्दस्य दर्शनात्, 'अग्नेर्ऋग्वेदः' इति ह्युपक्रमः इति सिद्धान्तसूत्रार्थः । संसर्गविधालक्षणादिसाधारण्येनेत्यस्य बोधे इत्यत्रान्वयः, न तूपस्थितौ । उभयं विवक्षितम्, संसर्गविधालक्षणारूपोभयाधीनज्ञानं विवक्षितम् । कर्मत्वादिकल्पकत्वानुपपत्तेः, कर्मत्वादिज्ञानजनकत्वानुपपत्तेः । (तद्वाचकेति ।) कर्मत्वादि-

वाचकेत्यर्थः । (कल्पकत्वाभावेऽपि चेति ।) लक्षणया कर्मत्वादिबोधे लक्षणाधि- द्वितीयादिविभक्तिकल्पनं व्यर्थमिति भावः । (तत्तात्पर्येति ।) कर्मत्वादितात्पर्ये- त्यर्थः । (तदेकदेशेति ।) 'मन्त्रब्राह्मणयोर्वेदनामधेयम्' इत्यापस्तम्बोक्तमन्त्र- ब्राह्मणसमुदायरूपस्य वेदस्यैकदेशेत्यर्थः । (अतश्चेति ।) प्रसिद्धार्थतयोद्देश्यत्वं वक्तव्यम्, प्रसिद्धिश्चोपक्रमाद्वक्तव्या, उपक्रमश्च वेदपदघटितः, तस्मादित्यर्थः। तत्प्रचुरत्वेन, ऋक्प्रचुरत्वेन । (वार्ताकेति ।) 'न वार्ताकं भक्षयेत्' इति श्रुत्या 'यस्योदरे तु वार्ताकं तस्य दूरतरो हरिः' इति भारतवचनेन च 'वार्ताककतकालिङ्गशिग्वलाबूनि भक्षयन् । अन्तकाले जगन्नाथं गोविन्दं न स्मरिष्यति' इति विश्वामित्रस्मृत्या 'शिग्रुवार्ताकयोर्भक्षः अपि वेदान्तपारगम् । पातयेदविचारेण तस्मात्तं परिवर्जयेत्' इति देवलस्मृत्या च बोधितनिषेधस्य यथावयवशोऽपि प्रवृत्तिस्तथेति भावः । एतादृशविषये, निषेधविषये । (कौ- स्तुभे द्रष्टव्यमिति ।) 'पशुना यजेत' इति विधेरवयवविषयत्वे आपणस्थं पश्व- वयवं क्रयेण संपाद्य तेन यागकरणेऽप्यदृष्टापत्त्यावयविविषयत्वम्, निषेधस्थले तु 'न गां भक्षयेत्' इत्यादौ गवाद्यवयवभक्षणेनापि पापोत्पत्त्यावयवविषयत्व- मिति रीत्या कौस्तुभे प्रतिपादितमित्यर्थः । ननु ऋग्वेदेन यत्र यत्र कर्मविधानं तत्र तत्र तत्तद्विहितकर्मप्रकरणवशेन तत्तत्प्रकरणस्थर्चामेवाग्नेयीन्यायेन ग्रही- तव्यत्वात् 'उच्चैर्ऋचा क्रियते' इति वाक्यस्य प्रकरणवशेन प्रकरणस्थर्ग्विषय एवोच्चैष्ट्वविधायकत्वं वक्तव्यम् अन्यथा प्रकरणबाधापत्तेः, त्वदुक्तरीत्या वेद- त्वस्य तादृशर्क्ष्वपर्याप्ततया वाक्यप्रकरणाविरोधाय वाक्यस्थर्क्पदमृक्सामान्यपर- मेव स्यादित्यत आह— एवं चेति । स्वविषये, प्रकरणाविषये । (उपसंहारा- नुपपत्तेरिति ।) तत्तत्कर्मप्रकरणापेक्षया 'उच्चैर्ऋचा क्रियते' इति वाक्यस्य प्रबलत्वादिति भावः ॥ १ ॥

असंजातविरोधित्वेनोपक्रमस्य तदनुरोधेनोपसंहारनयनवद्वारवन्तीयसामस्वरूपाश्रि- तोत्पत्तिस्वररूपासंजातविरोध्यनुरोधेन चरमोपस्थितयाजुर्वेदिकस्वरान्यथानयनं स्यादिति दृष्टान्तसंगतिः । **गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन**

**वेदसंयोगः** ॥ गुणमुख्यव्यतिक्रमे अङ्गप्रधानयोर्विरोधे अङ्गस्य प्रधानार्थत्वात् मुख्येन प्रधानेन वेदसंयोगः प्रधानवेदीयस्वररूपधर्मसंबन्ध इति सूत्रार्थः । विलम्बोपस्थितिः, विलम्बेनोपस्थितिर्यस्य प्रधानवेदीयस्वरस्य सः । अयम्, प्रधानवेदीयः स्वरः । इतरथा, कल्प्यत्वप्रयुक्तदौर्बल्यमनङ्गीकृत्य प्रधानीयधर्मस्यैवाङ्गेषु कल्पने । (अध्वर्युकर्तृकत्वापत्तेरिति ।) अध्वर्योः प्रधानवेदगतत्वादिति भावः । उत्पाद्यते ऋग्वेदेन यत्कर्म मन्त्रो वा ज्ञायते तत्र उच्चैष्ट्वं कार्यमित्यर्थः पर्यवस्यति । प्रयोज्यत्वानवगतेः, कर्तव्यत्वानवगतेः । विनियोगोत्तरकालमेव, विधिबोधिताधानोपकाररूपफलसाधनत्वबोधोत्तरमेव । उत्पत्तिबाधकः, उत्पत्तिस्वरबाधकः ॥ २ ॥

उत्पत्तिवेदनिबन्धनस्वरप्रसङ्गादुत्पत्तिर्विचार्यत इति प्रसङ्गसंगतिः । **भूयस्त्वेनोभयश्रुति** ॥ उभयत्र श्रूयमाणं कर्माङ्गभूयस्त्वेन निर्णीतोत्पत्तिकमिति सूत्रार्थः । द्वैविध्ये, एकत्र द्रव्यमपरत्र देवतेति रीत्या द्वैविध्ये । बहिरङ्गत्वेऽपि, देवतोद्देश्यकद्रव्यत्यागरूपयागे द्रव्यापेक्षया देवताया विप्रकृष्टत्वेऽपि । अव्यभिचारात्, क्रत्वव्यभिचारात् । (न तु द्रव्यस्येति ।) भोजनादौ द्रव्यस्योपयोगित्वेन व्यभिचारित्वादिति भावः । (विरोधिनीति ।) गुणे इति शेषः ॥ ३ ॥

वाक्यविनियोगे निरूपिते विनियोगनिरूपणप्रसङ्गात्प्रकरणविनियोगो निरूप्यते । **असंयुक्तं प्रकरणादितिकर्तव्यतार्थित्वात्** ॥ श्रुतिलिङ्गवाक्याविनियुक्तं यत् तत् प्रकरणाद्विनियुक्तमवगन्तव्यं फलवतो यागस्येतिकर्तव्यतार्थित्वात् स्वानुग्राहकक्रियायामाकाङ्क्षावत्त्वादिति सूत्रार्थः । (गोदोहनादेरिति ।) गोदोहनस्य पश्वर्थत्वेन चोदितस्य दर्शोपकारकत्वेऽपि दर्शाङ्गत्वाभावादिति भावः । (साकाङ्क्षत्वमात्रमिति ।) दर्शादेश्चमससाकाङ्क्षत्वेऽपि गोदोहनानाकाङ्क्षत्वान्न गोदोहनस्य दर्शाङ्गत्वम् अतो नातिव्याप्तिरिति भावः । (तदापत्तेरिति ।) उपहोमानामुपकार्याकाङ्क्षाया विकृतिसंनिधिपाठस्य च सत्त्वात्प्रकरणाद्विकृत्यङ्गत्वापत्तेरित्यर्थः । (उभयाकाङ्क्षेति ।) विकृतेः क्लृप्तोपकार-

प्राकृताङ्गैर्निराकाङ्क्षतया उपहोमविषये आकाङ्क्षाभावान्नोपहोमानामुभयाकाङ्क्षा-घटितप्रकरणादङ्गत्वमिति भावः । तत्, संनिधिपठितत्वम् । (मन्त्रादीना-मिति ।) लिङ्गविनियोज्यानामिति शेषः । (अनाकाङ्क्षितत्वेनेति ।) दर्शाद्य-जनकत्वाद्दर्शादेः प्रयाजादिष्वाकाङ्क्षा नास्तीति भावः । (प्राधान्यापत्तेरिति ।) फलजनकापूर्वान्यतरजनकत्वस्यैव प्राधान्यादिति भावः । (अतिदेशापत्ते-श्चेति ।) फलवतः प्रयाजस्यातिदेशस्वीकारे फलवत्त्वस्यातिदेशाविषयत्वात्प्रयोज-कत्वादिति भावः । तया, इतिकर्तव्यताकाङ्क्षया । इतिकर्तव्यताकाङ्क्षाया इत्यस्य प्रामाण्यमित्यत्रान्वयः । (तन्निष्ठेति ।) उपस्थितिनिष्ठेत्यर्थः । अननुगृही-तस्य, क्रियानिष्ठशक्त्यनुग्राहकव्यापारनिरपेक्षस्य । कर्मादेः, क्रियारूप-कर्मादेः । (संयोगविभागारम्भकत्वदर्शनादिति ।) क्रिया, क्रियातो विभागः, विभागात्पूर्वदेशसंयोगनाशः, तत उत्तरदेशसंयोगोत्पत्तिरिति रीत्या संयोगादि-फलजनकत्वस्य कर्मणि दर्शनात्फलजननांशे क्रियारूपकर्मणो न स्वगतशक्ति-निष्पादकव्यापाररूपेतिकर्तव्यतापेक्षेति भावः । (नेदं प्रकरणमिति ।) इदं क्रियागतफलनिष्पादकशक्तिजनकव्यापारस्वावच्छिन्नापेक्षणं न प्रकरणपदाभि-धेयमित्यर्थः । तत्त्वेन, व्यापारविशेषत्वेन । निरुक्तप्रकरणस्य, व्यापारविशेषा-पेक्षणरूपप्रकरणस्य । (तदघटिताङ्गत्वेति ।) व्यापारविशेषाघटिताङ्गत्वेत्यर्थः । न तदापत्तिः, न फलसंबन्धापत्तिः । एवम्, विशेषाकाङ्क्षाया एव प्रकरण-पदार्थत्वे । स्वतो निराकाङ्क्षस्य, स्वभावादेवानुत्थितविशेषाकाङ्क्षस्य । अन्य-तराकाङ्क्षयैव, प्रयाजादीनामुपकार्याकाङ्क्षयैव । अङ्गत्वोपपत्तिरित्यस्य भव-दुक्तं व्यापारविशेषापेक्षणरूपप्रकरणं न प्रयाजाद्यङ्गत्वे प्रमाणं स्यादिति भावः । विकृतौ च भावनाया विशेषापेक्षेत्यादिकस्य त्वदुक्तप्रकरणस्योपहोमविषये विकृतेः सत्त्वेन प्रकरणेनोपहोमादीनामङ्गत्वापत्तौ प्राकृताङ्गविषयेऽतिदेशकल्पनं निष्प्रयो-जनमिति भावः ॥ ४ ॥

प्रकरणविनियोगे निरूपिते विनियोगप्रसङ्गात्स्थानविनियोगो निरूप्यते । क्रमश्च देशसामान्यात् ॥ क्रमः स्थानं देशसामान्यात् अनुष्ठानदेश-

सामान्यात् प्रकरणाङ्गिकल्पनाद्वारा अङ्गत्वे प्रमाणमिति सूत्रार्थः । तथात्वापत्तेः, स्थानप्रमाणत्वापत्तेः । शुन्धध्वम्, शुद्धिं कुरुध्वम् । अनुष्ठानसादेश्यात्, क्रयसंनिधावाम्नातस्याग्नीषोमीयपशोर्वचनान्तराच्चतुर्थेऽहन्यनुष्ठानं पशुधर्माश्च तत्रैव श्रुता इति रीत्यानुष्ठानसादेश्यात् । तदपेक्षया, प्रकरणापेक्षया । अन्यतराकाङ्क्षालक्षणस्येत्यनन्तरं दौर्बल्यमिति पूरणीयम् । (अनुष्ठानसादेश्यस्येति ।) दौर्बल्यमिति शेषः । तत्र हेतुमाह— विधिसंनिधानस्येत्यादिना । तयोः, पाठक्रमसंनिधिक्रमयोः ॥ ९ ॥

क्रमविनियोगे निरूपिते विनियोगप्रसङ्गात्समाख्याविनियोगो निरूप्यते । **आख्या चैवं तदर्थत्वात्** ॥ समाख्या च एवं विनियोजिका विनियोगार्थत्वादिति सूत्रार्थः । निर्मन्थ्यादीत्यादिपदेन प्रोक्षितपदं गृह्यते । चम्यते भक्ष्यत इति व्युत्पत्त्या चमसपदं भक्ष्यविशेषवाचि । होतुः चमसः भक्ष्यं प्रैतु गच्छत्विति वाक्यार्थः । काण्डस्येति पदं भक्ष्यद्रव्यस्याप्युपलक्षकम् । कर्तृकत्वादेरित्यादिपदं भक्षणपरम् । पदमात्रम्, 'सोऽग्नीन्' इत्यादिरीत्या वक्ष्यमाणपदमात्रम् ॥ ६ ॥

श्रुत्यादिषु षट्सु प्रमाणेषु निरूपितेषु प्रसङ्गात्तेषां बलाबलं निरूप्यते । **श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्** ॥ श्रुत्यादीनां परस्परसमवायाख्यविरोधे परनिर्दिष्टस्य सूत्रे पूर्वनिर्दिष्टापेक्षया दौर्बल्यं पूर्वकल्पनामुखेन परस्य विनियोजकतया विनियोजकत्वविषये विप्रकर्षादिति सूत्रार्थः । वाक्यप्रकरणाभ्यामित्यादौ वैमृधस्य वाक्यं प्रयाजादीनां प्रकरणमिति विवेकः । एकशेष्यर्थत्वेऽपि, पौर्णमास्यर्थत्वेऽपि । तदभावात्, द्वारैक्याभावात् । प्रमाणत्रयम्, तृतीयाश्रुतिः क्रयप्रकरणं क्रियाकारकपदसमभिव्याहाररूपं वाक्यमिति रीत्या प्रमाणत्रयम् । अत एव, उद्देश्यसमर्पकत्वादेव । अत एव, उक्तप्रमाणानां क्वचित्क्वचित्तात्पर्यग्राहकत्वादेव । तस्यापि, वाक्यस्यापि । लिङ्गयोः, मुख्यामुख्यसामर्थ्ययोः । 'स्योनं ते सदनं कृणोमि' इत्यस्य हे पुरोडाश ते तव

स्योनं सुष्ठु सेवनयोग्यं सदनं स्थानं करोमीत्यर्थः । 'तस्मिन्सीद' इत्यस्य तस्मिन्कृतसदने सीद स्थितिं कुर्वित्यर्थः । ('सा वैश्वदेवी' इतिवदिति ।) 'तप्ते पयसि दध्यानयति' इति वाक्यान्तरोपात्तपयःपरामर्शित्वं यथा सेति तच्छब्दस्य तथेत्यर्थः । त्सरा, छद्मगतिः । (व्यपेतेति ।) व्यवहितेत्यर्थः । संनिहितयत्किंचिदित्यादेः यत्किंचपदस्य यद्यदिति वीप्सार्थकतया तत्तत्पदार्थो-पस्थापमात्त्तेनेति तत्तत्पदार्थं परामृश्य विधीयमानमुपांशुत्वं तत्तत्पदार्थधर्म एवेति भावः । वाक्यावगतेन, 'संस्थाप्य पौर्णमासीं वैमृधमनुनिर्वपति' इति वाक्या-वगतेन । अग्नीषोमादिपदैकवाक्यतापन्नानाम्, 'अग्नीषोमाविदं हविरजुषेताम्' इति सूक्तवाकमन्त्रगताग्नीषोमपदैकवाक्यतापन्नानाम् । अमावास्याङ्गदेवताप्रकाश-नार्थत्वम्, प्रकरणादमावास्याङ्गदेवतार्थत्वम् । (प्राकरणिकवाक्येन बाध्यत इति ।) अग्नीषोमाविति पदस्य पूर्णमासदेवताभिधायिनः सूक्तवाकाधिकरणे सूक्तवाकगतस्य पूर्णमास्यां विभज्य विनियोगस्योक्तत्वेन तत्समभिव्याहृतत्वेन तदेकवाक्यतापन्नत्वरूपेण 'इदं हविः' इत्यादिगतेन वाक्येन 'इदं हविः' इत्यादेः पौर्णमास्याङ्गत्वात् तद्विरोधेनास्य 'इदं हविः' इत्यादेः एतच्छेषस्या-मावास्यायां प्रकरणकल्प्योच्चारणस्य बाध इति भावः । किं तु 'इन्द्राग्नी इदं हविरजुषेताम्' इत्यत्र हविरित्यादेरेवामावास्याङ्गत्वं न 'अग्नीषोमाविदं हविर-जुषेताम्' इतिभागगत'इदं हविः'इत्यादेरिति निष्कर्षः । (फलवत्त्वेनेति ।) इष्टिपशुसोमानां सर्वेषामेव राजसूयपदार्थतया सोमयागरूपस्याभिषेचनीयस्यापि स्वाराज्यरूपं यद्राजसूयफलं तद्वत्त्वेनेत्यर्थः । विकृतावपि, दर्शपूर्णमासविकृतौ पशुयागेऽपि । प्राकृताङ्गानुवादेन, प्राकृताज्यानुवादेन । वाचनिकम्, 'पृष-दाज्येनानूयाजान्यजति' इति वचनसिद्धिकम् । पृषत्तादि, दधिमिश्रिताज्यं पृषत् (?) तदादि । तत्संदष्टस्य, विकृत्याकाङ्क्षायामनिवृत्तायां प्राकृताङ्गानु-वादेन विहिताङ्गसंदष्टस्य । तत्पूर्वभावित्वे, अनिवृत्ताकाङ्क्षायां विधीयमानाङ्ग-पूर्वभावित्वे । (उक्तविधेति ।) अनिवृत्ताकाङ्क्षायां विधीयमानत्वविशिष्टेत्यर्थः । औदुम्बरत्वशरत्वादेः, 'औदुम्बरो यूपो भवति' 'शरमयं बर्हिर्भवति' इति

वैस्वबर्हिः:कार्यापन्नतया विदितौदुम्बरत्वशरत्वादेः । स्वतन्त्रोत्पन्नस्य, प्राकृताङ्ग-संबन्धितयाज्ञातत्वे सति स्वरूपतो ज्ञातस्य । ननु माहेन्द्रस्तोत्ररूपप्राकृताङ्ग-संबन्धित्वेन विधानात्कथमभिषेकस्य स्वतन्त्रोत्पन्नत्वमित्यत आह— माहेन्द्रस्तोत्रं प्रतीति । प्रत्येकम्, इष्टित्वसोमत्वादिरूपप्रत्येकधर्मेण । प्रकरणाभावः, उभ-याकाङ्क्षाघटितप्रकरणाभावः । पवित्रादारभ्येत्यादेः पवित्रत्वादिप्रत्येकरूपेण विकृतित्वेऽपि पवित्रादारभ्य क्षत्रधृतिपर्यन्तक्रियानिष्ठराजसूयत्वधर्मपुरस्कारेण फलसंबन्धात्तस्य तेन रूपेणाङ्गाकाङ्क्षासत्त्वेन प्रकरणसंभव इति भावः । (सां-नाय्याङ्गत्वमिति ।) संनिधानादिति शेषः । महाधिकारेण, दर्शपूर्णमासमहा-प्रकरणेन । तस्यापि, संनिधेरपि । तत्त्वं च, अप्राप्तबाधकत्वं च । (लिङ्गा-दिकल्प्येति ।) लिङ्गादिभिः कल्प्येत्यर्थः । (गृहमेधीयेति ।) गृहमेधीयस्य स्वसंनिध्याम्नातप्रकृतिक्लृप्तोपकाराज्यभागाभ्यामङ्गाकाङ्क्षानिवृत्तेः प्राकृताङ्ग-विषयेऽतिदेशस्यैवाप्रवृत्त्या आज्यभागद्वयेनातिदेशबाधोऽप्राप्तबाध इति भावः । (मिथ्यात्वस्यापीति ।) सामान्यशास्त्रजन्यज्ञाने इति शेषः । 'न तौ पशौ करो-ति' इति वाक्यघटकतावित्यस्याज्यभागावित्यर्थः । प्रापकशास्त्रस्य, अतिदेश-रूपप्रापकशास्त्रस्य । रागप्राप्तनिषेधवत्, रागप्राप्तकलञ्जभक्षणनिषेधवत् । एतेन यत्र पुनः श्रुतिरानुमानिकी लिङ्गं च प्रत्यक्षं तत्र कथं यथा स्मृतिवैदिक-लिङ्गविरोधे, तत्र स्मृतेर्मूलान्तरमपि संभाव्यते न तु लिङ्गस्येति तदेव बलव-दनुसर्तव्यमिति श्रुतिलिङ्गाधिकरणवार्त्तिकं स्मृत्यपेक्षया वैदिकलिङ्गस्य प्राब-ल्ये साधकमिति यत्प्रलपितं तदपास्तम् । नास्मिन्वार्त्तिके 'स्मृतेर्मूलान्तरमपि संभाव्यते न तु लिङ्गस्य' इत्यनेन स्मृतेर्वेदलिङ्गापेक्षया दौर्बल्ये वेदभिन्नतन्त्रादि-संभावना हेतुतया निर्दिष्टा, तेन वेदमूलकत्वेन निश्चितानां स्मृतीनाम् 'यद्वै किं च मनुरवदत्तद्भेषजम्' 'स होवाच व्यासः पाराशर्यः' इति वेदेन वेदमूल-कत्वेननिश्चितमनुपराशरकृतत्वेन सिद्धानां वेदलिङ्गापेक्षया दौर्बल्यं नास्तीत्येव तन्त्रवार्त्तिकाभिप्रायप्रतीतेः; अन्यथा स्मृतेर्मूलं संभाव्यते श्रुतिरूपं मूलं संभाव्यते इति वा हेतुमनिर्दिश्य मूलान्तरमपीति प्रकृतश्रुतिभिन्नतन्त्रादिमूल-

कस्मृत्यन्तरसंग्राहक-'मूलान्तरम्'-इति निर्देशानुपपत्तेः। इदं तु बोध्यम्— मनु-पराशरस्मृतिविरोधेऽन्यस्मृतीनां दौर्बल्यमेव, मनुपराशरस्मृत्योरुदाहृतप्रत्यक्ष-वेदवाक्यसिद्धप्रामाण्यकत्वात् अन्यासां तदभावात्। स्मृतिगृह्यसूत्रयोर्विरोधे स्मृतिविरुद्धांशे गृह्यसूत्रस्याप्रामाण्यमेव। 'धर्मशास्त्रस्य कर्तारो मन्वाद्या ऋषयः स्मृताः। तत्प्रयुक्तप्रणेतारो गृह्यकारास्तु मन्त्रतः' इति देवलस्मृत्या वर्णाश्रम-ग्रन्थधृतया स्मृतेर्मूलत्वस्य गृह्यसूत्रस्य मूलित्वस्य चावगमात्। स्मृतिपुराणयो-र्विरोधे पुराणस्य दौर्बल्यम्, 'श्रुतिस्मृतिपुराणानां विरोधो यत्र दृश्यते। तत्र श्रुतिर्बलिष्ठा स्याद्द्वयोर्मध्ये स्मृतिर्वरा' इति वर्णाश्रमग्रन्थधृतात्रि(?)स्मृतिवचन-प्रामाण्यात्। एतेन पुराणस्य स्मृतित्वं नास्तीत्यपि स्पष्टम्॥ ७॥

श्रुत्यादिप्रमाणानां विरोधे बलाबलनिरूपणे कृते विरोध एव क्वास्ति क्व नास्तीति चिन्तायाः प्रसक्तत्वात्प्रसङ्गसंगत्या विरोधाविरोधौ चिन्त्येते। **अहीनो वा प्रकरणाद्गौणः**॥ अहीनशब्दो ज्योतिष्टोमे गौणः 'तिस्र एव—' इत्यहीनपदघटितवाक्यस्य ज्योतिष्टोमप्रकरणे आम्नानादिति पूर्वपक्ष-सूत्रार्थः। **असंयोगात्तु मुख्यस्य तस्मादपकृष्येत**॥ द्वादशोपसत्ता ज्योतिष्टोमप्रकरणादपकृष्येत तस्याः 'द्वादशाहीनस्य' इत्यहीनसंयोगकथना-ज्ज्योतिष्टोमसंयोगाकथनाच्च; न चाहीनशब्दो ज्योतिष्टोमे गौण आश्रयितव्यः मुख्यस्य द्वादशाहस्य ग्रहणसंभवे गौण्या अनाश्रयणीयत्वात् तस्मात् न द्वादश-त्वस्योपसद्द्वारा त्रित्वेन ज्योतिष्टोमे विकल्प इति सिद्धान्तसूत्रार्थः। (उपसदो विधायेति।) दीक्षादिवसादूर्ध्वं सोमाभिषवदिवसात्प्राक्कर्तव्या होमा उपसदः तान्विधायेत्यर्थः। तदनुवादमात्रम्, ज्योतिष्टोमानुवादमात्रम्। न तूद्देश्ये-त्यत्रोद्देश्यपदमुपसद्रूपोद्देश्यपरम्। तद्वदेव, त्रित्ववदेव। तदनुवादेन, उपसद-नुवादेन। (तस्यावृत्त्या द्वादशत्वापत्तेश्चेति।) अहीनोद्देशेन द्वादशत्वविधौ ज्योतिष्टोमाहीनस्यावृत्त्या द्वादशत्वसिद्धावुपसत्सु द्वादशत्वस्य भवदभिमतस्यासिद्ध्या-पत्तेरिति भावः। नञ्समासानुपपत्तिरिति शङ्कते— अथेति। (तुल्यार्थतृतीयेति।) तुल्यार्थैश्च तृतीया च सप्तमी च उपमानं च अव्ययं च द्वितीया च कृत्याः

कृत्यप्रत्ययान्ताश्च तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः, एताः पूर्वाः प्रकृतिस्वरयुक्ता भवन्तीति तुल्यार्थतृतीयेति सूत्रार्थः । ('-प्रकृत्या पूर्वपदम्' इतीति ।) 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' इति सूत्रम् । बहुव्रीहौ समासे यत्पूर्वपदं तत्प्रकृत्या प्रकृतिस्वरेण युक्तमिति तदर्थः । अत्र बहुव्रीहिपदं विहाय 'प्रकृत्या पूर्वपदम्' इत्येतावन्मात्रमनुवर्त्यते । ('अह्नः खः क्रतौ' इतीति ।) अहःशब्दादहःशब्दखप्रत्ययघटितसमुदायेन 'अहीन' इत्यनेन क्रतौ यागविशेषे वाच्ये समूहार्थे खप्रत्ययो भवतीति तत्सूत्रार्थः । ('तस्य समूहः' इतीति ।) तस्य षष्ठयन्तात्समूहार्थे खप्रत्ययो भवतीति तत्सूत्रार्थः । ('आयनेयी—' इति ।) आयन् च एय् च ईन् च ईय् च इय् च आयनेयीनीयियः, एते प्रत्यये आदिभूताना फढखछघामादेशा भवन्तीति तत्सूत्रार्थः । ('आद्युदात्तश्च' इतीति ।) प्रत्ययस्य य आदिभूतो वर्णः स उदात्तः स्यादिति तत्सूत्रार्थः । एकार्थत्वेनेत्यस्य विधौ शब्दभेदो न युज्यते इत्यनेन कथिते विधिवाक्यगतशब्दभेदायुक्तत्वादौ हेतुत्वेनान्वयः । अतिदेशप्राप्तेः, उपसद्विषयकातिदेशप्राप्तेः । अयमर्थवादः, 'द्वादशाहीनस्य' इत्ययमर्थवादः । अतो वाक्येनेत्यत्र अत इत्यस्य भाष्यकारोक्तसिद्धान्तरीत्येत्यर्थः ॥ ८ ॥

त्रित्वद्वादशत्वयोर्विरोधात्प्रकरणानिवेश उक्तः, प्रतिपदोस्तु विरोधाभावात्प्रकरण एव निवेशः स्यादिति प्रत्युदाहरणसंगतिः । **द्वित्वबहुत्वयुक्तं वाचोदनात्तस्य** ॥ द्वित्वबहुत्वयुक्तं प्रतिपद्विधानमुत्कृष्यते तस्य द्वित्वस्य बहुत्वस्य वा प्रकृतावचोदनादिति सूत्रार्थः । ('उपास्मै गायता नरः' इतीति ।) नर इति नृशब्दस्य बहुवचनम्; नरः मनुष्याः उप समीपदेशे अस्मै यजमानाय गायतेति तदर्थः । (प्रतिपदमिति ।) स्तोत्रसाधनीभूततृचगताद्या ऋक्प्रतिपत् तामित्यर्थः । नित्याम्, अनैमित्तिकामकाम्याम् । ('एते असृग्रमिन्दव इति' इति ।) एते इन्द्रियाधिष्ठातृत्वेन संनिहिता देवाः असृक् रुधिरं तन्मये देहे रमन्त इत्यसृग्रम् मनुष्या इति यावत्, इन्दवः इन्दुमण्डलस्थाः पितरः एतान्सर्वान्प्रजापतिरसृजतेति तदर्थः । (यद्यपीति ।) पृथग्विधानाय

द्विशब्दार्थयजमानशब्दार्थयोः परस्परसंबन्धाभावाद्वित्वविशिष्टयजमानस्य निमित्तत्वासंभव इति भावः। (हविरार्त्यधिकरणन्यायेनेति।) आर्तिमात्रस्य सर्वदा सत्त्वेनापाक्षिकतया निमित्तत्वासंभवात्पृथग्विभक्त्यन्तार्थहविर्विशिष्टार्तेर्निमित्तत्वं साधयता न्यायेनेत्यर्थः। पाक्षिकत्वाभावेन, द्वित्वस्य यजमानत्वस्य च परस्परव्यधिकरणस्य ज्योतिष्टोमे सदा सत्त्वेन प्रत्येकं तस्यानित्यसंबन्धरूपपाक्षिकत्वाभावेन। (प्रधानभूतेति।) सप्तमीविभक्तिरूपप्रत्ययार्थत्वेन प्रातिपदिकार्थापेक्षया प्रधानभूतेत्यर्थः; उद्देश्यभूतेनि वार्थः। द्वित्वविशिष्टयजमानस्यैव निमित्तत्वं प्रतिपाद्यताम्, किं व्यासज्ज्यवृत्तिनिमित्तत्वप्रतिपादनेनेत्यत आह— विशेष्यभावे विनिगमनाविरहादिति। उक्तविधनिमित्तत्वे, बहुत्वयजमानत्ववृत्तिव्यासज्ज्यवृत्तिनिमित्तत्वे। (अन्यतरेति।) द्विशब्दयजमानशब्दान्यतरेत्यर्थः। आद्यवाक्ये, 'द्वयोर्यजमानयोः' इति वाक्ये। (स्त्रीलिङ्गत्व इति।) यजमानयोरिति पदस्येति शेषः। द्वितीयवाक्येऽपि, 'बहुभ्यो यजमानेभ्यः' इति वाक्येऽपि। पाशाधिकरणन्यायेनेत्यादेरयमाशयः— बहुवचनानुरोधेन पाशप्रातिपदिकस्य प्रकरणसंबन्धिनो यथा नोत्कर्षस्तथा गुणभूतलिङ्गानुरोधेन यजमानप्रातिपदिकस्य प्रकरणसंबन्धिनो नोत्कर्ष इति। व्यत्ययानुशासनेन, 'सुप्तिङुपग्रहलिङ्गनराणाम्—' इति व्यत्ययानुशासनेन। तस्यान्तरङ्गत्वेन, एकत्वस्यान्तरङ्गत्वेन। अशक्तौ, यजमानस्याशक्तौ सत्याम्। (दक्षिणापरिमाण इति।) दक्षिणायाः 'तस्य द्वादशशतम्' इत्युक्तद्वादशशतत्वरूपपरिमाणेत्यर्थः। अस्यापि, एकत्वस्यापि। (न तद्विषयतेति।) न यथाशक्तिन्यायविषयतेत्यर्थः। 'प्रास्मै' इत्यस्य, 'अस्मै' इति पुंलिङ्गघटितस्य अध्रिगुप्रैषस्य। (प्रतिपत्संबन्धेनैवेति।) द्वित्वबहुत्वयोः क्रत्वव्यभिचारिप्रतिपत्संबन्धित्वेनेत्यर्थः॥ ९॥

'द्वयोर्यजमानयोः' इत्यादिवज्जाघन्या अपि प्रकरणासंबन्धादुत्कर्षः स्यादिति दृष्टान्तसंगतिः। **जाघनी चैकदेशत्वात्**॥ यत्र पशुयागादौ जाघनी वर्तते तत्र 'जाघन्या पत्नीः संयाजयन्ति' इति वाक्योत्कर्षः स्यात्, जाघन्याः पश्वेकावयवत्वेन पशुशून्यदर्शादावसंभवादिति पूर्वपक्षसूत्रार्थः। चोद-

**ना वापूर्वत्वात्** ॥ जाघन्याः पत्नीसंयाजोद्देशेन चोदना विधिः न जाघन्यु-द्देशेन पत्नीसंयाज विधिः येनोद्देश्यजाघन्याः प्रकरणे दर्शपूर्णमासीयेऽभावात्तद्वाक्य-मुत्कृष्येत, पत्नीसंयाजाश्चोद्देश्याः प्रकरणे क्लृप्ता न विधिमर्हन्ति, जाघनी च प्रकरणे अपूर्वत्वात् अज्ञातत्वात् विधानमर्हति आपणस्था क्रयेण संपादयितुं योग्यैव जाघनीति सिद्धान्तसूत्रार्थः । जाघन्या, पुच्छेन । (पत्नीरिति ।) 'पत्नीरिति पत्नीसंयाजस्य नामैकदेशेन निर्देश.' इति माधवाचार्याः । (पत्नी-संयाजा विधीयन्त इति ।) जाघनीप्रतिपत्तित्वेनेति शेषः । (उत्तरार्धादिशब्दव-दिति । 'उत्तरार्धात्स्विष्टकृतं यजति' इत्यत्र उत्तरार्धशब्दः पुरोडाशयागजन्या-पूर्वसाधनपुरोडाशैकदेशवाची यथा तथा । परप्रयुक्तत्वावगमात्, पशुयागजन्या-पूर्वेच्छाधीनेच्छाविषयत्वरूपापूर्वप्रयुक्तत्वविशिष्टपशुद्रव्यान्तर्गतत्वावगमात् । प्रयो-जनवत्त्वावगमेन, अपूर्वसाधनीभूतयागरूपद्रव्यत्यागघटकत्यागांशजनकपशुद्रव्या-वयवत्वसंबन्धेन अपूर्वरूपप्रयोजनवत्त्वावगमेन । इतरथा, पत्नीसंयाजोद्देशेन जाघनीविधौ । (पश्वङ्गत्वेति ।) अग्नीषोमीयपशुयागाङ्गत्वेत्यर्थः । (लोकेऽपि संभवादिति ।) तृप्तिविशेषेच्छाधीनमांसभक्षणसाधनत्वरूपतृप्तिरूपपरप्रयुक्तत्व-विशिष्टपश्वेकदेशत्वस्यापि जाघन्या लोके संभवेन क्रतुजन्यापूर्वप्रयुक्तपश्वनुनिष्पन्न-त्वनियमाभावेन क्रतुव्यभिचारित्वाज्जाघन्या यागीयत्वोपस्थितिर्न संभवतीति भावः । ('अंशुं गृह्णाति' इतिवदिति ।) अनारभ्याधीतवाक्यस्थांशुग्रहस्य प्राक-रणिकतत्सजातीयवाक्यान्तराज्ज्योतिष्टोमापूर्वसाधनत्वोपस्थितिवदित्यर्थः । प्राक-रणिकवाक्यम्, अग्नीषोमीयपशुप्रकरणस्थवाक्यम् । तदीयत्वोपस्थितौ, आरा-दुपकारककर्मान्तरभूतपत्नीसंयाजसंबन्धोपस्थितौ । प्राकरणिकपत्नीसंयाजवाक्य-स्य कर्मान्तरविधायकत्वे बाधकमाह– अतिदेशेन संनिधान इत्यादिना । (स-संबन्धिकत्वाभावादिति ।) उत्तरार्धशब्दप्रवृत्तिनिमित्तस्योत्तरार्धत्वस्य निरूपक-सापेक्षत्ववज्जाघनीशब्दप्रवृत्तिनिमित्तजाघनीत्वजातेर्निरूपकानपेक्षत्वादिति भावः । आज्यवत्' 'आज्येन पत्नीः संयाजयन्ति' इत्यनेनाज्यविधानवत् । (देवतात्वे-नेति ।) पत्नीनामिति शेषः । अवान्तरप्रकरणादेव, पत्नीसंयाजस्यावान्तर-

प्रकरणादेव । (विकल्पेनेति ।) दर्शपूर्णमासतोऽतिदेशात्पशुयागे प्राप्तपत्नीसंयाजे प्रकृताविव आज्येन जाघन्या विकल्पप्राप्तौ तन्निवारणार्थं प्राकरणिकवाक्यमिति भावः ॥ १० ॥

प्रकरणानुग्रहाद्धेतोर्जाघनीवत्संतर्दनमपि प्रकृतावेव निविष्टं स्यादिति दृष्टान्तसंगतिः । **संतर्दनं प्रकृतौ क्रयणवदनर्थलोपात्स्यात् ॥** संतर्दनाभावेन सह संतर्दनं प्रकृतावेव विकल्पेन स्यात् सोमक्रयणवत् प्रयोजनलोपाभावादिति पूर्वपक्षसूत्रार्थः । क्रयणवदिति दृष्टान्तनिर्देशो द्वादशाध्यायीयक्रयणाधिकरणपूर्वपक्षरीत्या न तु सिद्धान्तरीत्या 'दशभिः क्रीणाति' इति वचनबलेन क्रयसमुच्चयस्य द्वादशे वक्ष्यमाणत्वात् । **उत्कर्षो वा ग्रहणाद्विशेषस्य ॥** संतर्दनस्य प्रकृतित उत्कर्षः स्यात् 'दीर्घसोमे संतृद्ये' इति दीर्घसोमशब्दितस्य सोमयागविशेषस्य संतर्दनसंबन्धित्वेन ग्रहणादिति सिद्धान्तसूत्रार्थः । संतृद्ये, संतृद्यात् । धृत्यै, धारणाय । प्रकरण एव, अग्निष्टोमसंस्थावच्छिन्नज्योतिष्टोम एव । नित्यत्वेन, वचनं विनापि सिद्धत्वेन । (अष्टदोषेति ।) संतर्दनपक्षे असंतर्दनशास्त्रप्रामाण्यत्यागः, तदप्रामाण्यकल्पनम्, असंतर्दनानुष्ठानकाले पुनः प्रामाण्यकल्पनम्, कल्पिताप्रामाण्यनिवृत्तिरिति चत्वारो दोषाः । एवमसंतर्दनपक्षे संतर्दनशास्त्रस्याप्रामाण्यकल्पनम्, संतर्दनकालस्वीकृतप्रामाण्यत्यागः, संतर्दनकाले पुनः प्रामाण्यकल्पनम्, कल्पिताप्रामाण्यत्यागश्चेति चत्वारो दोषा इति रीत्याष्टदोषेत्यर्थः । प्रकरणानुरोधादङ्गीकृत्य, प्रकरणाबाधाय स्वीकृत्य । (विदारणाप्रसक्तेरिति ।) सोमलतायां दैर्घ्ये सोमस्याधिक्याद्ग्रावभिः पुनः पुनस्तदभिषवणे फलकयोर्विदारणप्रसक्त्या धृत्यै इति संतर्दनस्यार्थवाद उपपन्नो भवदिति भावः । (निवेश इति ।) संतर्दनस्येति शेषः । प्रकारान्तरेण सोमविवृद्धिमुपपादयति— वस्तुतस्त्विति । अंशून्, सोमलताभागान् । उपसमूहति, त्रिपर्वमुष्टिपरिमितसोमे प्रक्षिपति । (यजमानस्यैव स्यादिति ।) दशमुष्टिपरिमितसोममात्रग्रहणे यजमानभक्षमात्र एव हुतशेषः सोमः पर्याप्तः स्यात्, होत्रध्वर्य्वादीनां शास्त्रविहितसोमभक्षो न सिध्ये-

दिति भावः । (उत्तरादोहवदिति ।) सायंदोहप्रकरणे गोत्रयदोहनविधानानन्तरम् 'तूष्णीमुत्तरा दोहयति' इति वचनेन तिसृभ्यो गोभ्य उत्तरा अधिका गा अधिकपयोपेक्षायां तूष्णीं दोहयेदित्यर्थकेन गोदोहने संख्यानियमाभाववदित्यर्थः । अपेक्षितपरत्वप्रतीतेः, सोमवृद्ध्यर्थमपेक्षितसोमग्रहणपरत्वस्य 'अंशूनुपसमूहति' इति वाक्येऽवगतेः । (कपिञ्जलेति ।) 'कपिञ्जलानालभेत' इत्यत्र वाक्यशेषरूपबाधकाभावाद्बहुवचनस्य प्रथमानतिक्रमणार्थं त्रित्वे पर्यवसानमुक्तम्,. इह उक्तमाननिन्दावचनरूपार्थवादानुसारेण'अंशून्' इति बहुवचनस्य त्रित्वे पर्यवसानमिति भावः । अङ्गत्वात्, ज्योतिष्टोमाङ्गत्वात् । अन्यासाम्, उक्थ्यषोडश्यतिरात्रसंस्थानाम् । (ज्योतिष्टोमे चेति ।) विकृतिभूतोक्थ्यादिसंस्थायां प्रकृतिभूताग्निष्टोमसंस्थाया चेत्यर्थ । ग्रहणविवृद्ध्या, सोमरसग्रहणविवृद्ध्या । (आश्रयभूतज्योतिष्टोमाभ्यासेति ।) काम्यसंस्थाश्रयभूतज्योतिष्टोमसंज्ञकयागप्रदानाभ्यासेत्यर्थः । (न विकल्पोऽपीति ।) संनर्दनोद्देश्यतावच्छेदकासंनर्दनोद्देश्यतावच्छेदकयोः काम्यसंस्थानित्यसंस्थयोर्भेदादेकावच्छेदेन द्वयोरनिवेशादिति भावः । (उत्तरकालविधिप्रतीतेरिति ।) विकृतित्वाद्धेतोरिति शेष. । आद्यप्रकारद्वयेनैव, अग्निष्टोमसंस्थाकज्योतिष्टोमस्य इष्ट्याद्यपेक्षया दीर्घत्वाद्दीर्घसोमत्वमाश्रित्य य पक्षः यजमानदैर्घ्यमादाय दीर्घसोमत्वमाश्रित्य य पक्षः तादृशपक्षद्वयेनैव । विकृतिमात्रे काम्यसंस्थासु द्विरात्रादौ च । विवृद्धग्रहणानि, विवृद्धसोमग्रहणानि । संस्थाङ्गानि, संस्थाया अङ्गानि । (अग्निष्टोमसंस्थाकेऽपीति) अग्निष्टोमसंस्थावच्छेदेनापि सर्वेनामुत्वे । (यदङ्गेति ।) यस्या. संस्थाया अङ्ग यदङ्गम्, यदङ्गं च तद्ग्रहण च यदङ्गग्रहणम्, तस्य या वृद्धि, तत्प्रयुक्त विवृद्धप्रदेय यस्य तस्य भावस्तत्त्वं यत्र ज्योतिष्टोमादौ तदपूर्वसाधनीभूतसंस्थापूर्वसाधनीभूतफलकसंस्कारकतया संनर्दनविधेरवगमादित्याद्यस्यार्थ. । यत्प्रयुक्तम्, संस्थाप्रयुक्तं विवृद्धिप्रदेयं यस्य तत्त्वम् यत्प्रयुक्तविवृद्धिप्रदेयकत्वं यत्र ज्योतिष्टोमादौ । शेषं पूर्ववत् । उक्तविधसर्वविकृतौ, काम्यसंस्थासु द्विरात्रादौ च । संस्थास्वेव, काम्यसंस्थास्वेव । तासाम्, काम्यसंस्थानाम् ।

तेन, सोमपदेन ॥ ११ ॥

संतर्दनस्य वाक्यविरोधात्प्रकरणेऽनिवेश उक्तः, प्रवर्ग्याभावस्य वाक्यविरोधाभावात्प्रकरण एव निवेशः स्यादिति प्रत्युदाहरणसंगतिः । **संख्यायुक्तं क्रतोः प्रकरणात्स्यात्** ॥ संख्यावाचकप्रथमशब्दयुक्तं यद्वाक्यं तस्मिन्नुच्यमानः प्रवर्ग्यनिषेधः क्रतोः ज्योतिष्टोमस्य स्यात् ज्योतिष्टोमप्रकरणादिति पूर्वपक्षसूत्रार्थः । **नैमित्तिकं वा कर्तृसंयोगाल्लिङ्गस्य तन्निमित्तत्वात्** ॥ ज्योतिष्टोमस्य यः प्रथमः प्रयोगः तन्निमित्तकं प्रवर्ग्यप्रतिषेधं वचनं प्रथमशब्दार्थश्च कर्तृसंयोगात् कर्तृसंयोगघटितः, अप्रवृत्तप्रवर्तनाविषयस्वरूप इति यावत्; लिङ्गस्य प्राथम्यरूपगमकस्य तं प्रति प्रवर्ग्यनिषेधं प्रति निमित्तत्वसंभवादिति सिद्धान्तसूत्रार्थः । प्रवर्ग्यं कर्मविशेषस्य नाम । तस्य च, प्रवर्ग्यस्य च । पुरस्तादुपसदाम्, ज्योतिष्टोमाव्यभिचरितसंबन्धानामुपसदां पूर्वकाले । (अव्यभिचरितेति ।) ज्योतिष्टोमक्रत्वव्यभिचरितसंबन्धोपसत्संबन्धो यः प्रवर्ग्यगतः तत्सहकृतेन 'अनारभ्याधीतानां प्रकृतिगामित्वम्' इत्येवमाकारकद्विरुक्तत्वन्यायेन प्रवर्ग्यस्य ज्योतिष्टोमाङ्गत्वोपस्थितेरिति भावः । (उपस्थितत्वादिति ।) उपसदामिति शेषः । तद्वाचकपदान्तरकल्पनया, उपसदामुद्देश्यत्वसमर्पक-'उपसदः'-इति द्वितीयान्तपदकल्पनया । तदर्थत्वोपपत्तेः, ज्योतिष्टोमार्थत्वोपपत्तेः । प्रकरण एव, ज्योतिष्टोमप्रकरण एव । तत्र च, कौषीतकीब्राह्मणज्योतिष्टोमप्रकरणे च । सर्वसंस्थः, अग्निष्टोमोक्थ्यादिसर्वसंस्थायुक्तः । सर्वावस्थः, प्रथमप्रयोगाद्द्वितीयप्रयोगाद्यवस्थायुक्तः । प्रयुज्यमानत्वेन, क्रियमाणत्वेन । अन्यसंस्थानाम्, उक्थ्यादिसंस्थानाम् । अन्यपदेन, 'यज्ज्योतिष्टोमः य एतानिष्ट्वान्येन यजेत' इत्युक्थ्यादिसंस्थानां ज्योतिष्टोमोत्तरत्व विधायकवाक्यगतान्यपदेन । तासु, उक्थ्यादिसंस्थासु । अन्यथा, प्रतिषेध पक्षे । प्रत्येकशक्त्यैव, प्रथमयज्ञपदेऽवयवशक्त्यैव । अनतिरिक्तशक्तिकल्पनायाम्, प्रथमयज्ञपदस्य ज्योतिष्टोमे रूढिशक्तिकल्पनायाम् । आद्यप्रयोग वाचित्वावगतेः, आद्यकृतिविषयवाचित्वावगतेः । प्रयोगपरत्वम्, ज्योतिष्टोम

प्रयोगपरत्वम् । यज्ञपदस्यार्थान्तरमाह— प्रकरणादित्यादिना । स च, ज्योतिष्टोमप्रथमप्रयोगश्च । पाञ्चमिकन्यायात्, पञ्चमाध्याये अग्निष्टोमसंस्थाकज्योतिष्टोम एव प्रथमयज्ञ इत्युक्तिघटितन्यायात् । तदप्राप्तेः, प्रवर्ग्यप्रतिषेधाप्राप्तेः । (कथं न तत्प्राप्तिरिति ।) प्राथम्यरूपनिमित्तसत्त्वे नैमित्तिकस्य प्रवर्ग्यप्रतिषेधस्य प्राप्तिरावश्यिकीति भावः । एष वाव प्रथमेत्यादेस्तदवधारणादित्यन्तस्यायमाशयः— यज्ञानामिति निर्धारणविभक्त्यन्तपदोक्तप्रकृतिविकृतिसाधारणयज्ञमात्रान्तर्गतस्य ज्योतिष्टोमस्य प्रथमयज्ञत्वोक्तौ तद्गतप्राथम्यं तद्भिन्नं यन्निर्धारणविभक्त्यन्तपदोपस्थाप्यं यज्ञमात्रं तन्निरूपितमित्यवगम्यत इति । अत एव, 'एष वाव—' इति वाक्यादेव । यथोक्तस्थले, 'न तौ पशौ करोति' इत्यत्र । कारकमात्रविषयत्वेन, रात्र्यधिकरणत्वरूपकारकमात्रविषयत्वेन । कारकस्यापि प्रथमप्रयोगाधिकरणस्येति षष्ठ्यौ समानाधिकरणे बोध्ये । (आक्षेपेणेति ।) श्राद्धस्येत्यादिः । (नानूयाजेष्वितिवदिति ।) 'यजतिषु ये यजामहं करोति नानूयाजेषु' इत्यत्रानूयाजयागभिन्नेषु 'यजतिषु ये यजामहम्' इति पर्युदासवदित्यर्थः । अयम्, 'न प्रथमयज्ञे प्रवृञ्ज्यात्' इति शब्दः । अस्य च, 'अग्निष्टोमे प्रवृणक्ति' इति वचनस्य च । नान्यविषयता, नाग्निष्टोमद्वितीयादिप्रयोगविषयता । सामान्यविधित एव, 'यत्प्रवर्ग्येण प्रवृणक्ति' इति सामान्यविधित एव ॥ १२ ॥

प्रवर्ग्यप्रतिषेधस्य प्रकरणे निवेशवत्पूषदैवत्ययागस्य प्रकरणे निवेशः स्यादिति दृष्टान्तसंगतिः । **पौष्णं पेषणं विकृतौ प्रतीयेताचोदनात्प्रकृतौ** ॥ पौष्णं पूषदेवतासंबन्धि यत्पेषणं तत् विकृतौ पूषदैवत्यविकृतियागे प्रतीयेत; कुतः? प्रकृतौ दर्शपूर्णमासयोः पूषदेवताया अचोदितत्वादिति सूत्रार्थः । अत एव, निष्ठार्थोपसर्जनस्य पेषणस्यान्यत्रान्वयानुपपत्तेरेव । स्वजन्येत्यत्र स्वपदं पूषदेवतापरम् । प्रकृतिद्रव्यस्य, पिष्टरूपचरुप्रकृतिद्रव्यस्य । अतिदेशेन, दर्शपूर्णमासान्तर्गतपुरोडाशयागादतिदेशेन । (कर्मान्तरविधेरेवेति ।) पूर्वपक्षरीत्येत्यादिः । वषट्कर्तुरित्यादेरयमाशयः— वषट्कर्तृपदेन लक्षणया वषट्-

र्तृभक्षमुद्दिश्य प्रथमपदलक्षितप्राथम्यविधिरूपानभिमतार्थसिद्ध्यापत्तिरि। त्र, वषट्कर्तृवाक्ये । अस्मदुक्तप्रकारस्तु, एतदधिकरणेऽस्म रस्तु ॥ १३ ॥

पेषणप्रसङ्गात्तद्विषयकचिन्तान्तरं क्रियत इति प्रसङ्गसंगतिः । **त र्थमविशेषात्** ॥ तत् पेषणं चरुपुरोडाशादिसर्वार्थं सर्वस्यापि विशेषादिति पूर्वपक्षसूत्रार्थः । **चरौ वार्थोक्तं पुरोडाशेऽर्थवि- षेधात्पशौ न स्यात्** ॥ पेषणं चरावेव स्यात् पुरोडाशे तु पेषणं श विनैव पुरोडाशभावनिष्पत्तिरूपार्थान्यथानुपपत्तिस्वरूपार्थादेवोक्तप्रायं पशौ तु पेषणं हृदयादिविन्यासविनाशापत्त्या न स्यादिति सिद्धान्तसूत्रार्थः । (अत्यन्ता- प्राप्तेति । प्रदेयसिद्धिप्रयोजनकस्य पेषणस्य कार्यवशेन प्राप्त्या स मात्रं तत्र विधीयते, प्रदेयनिष्पत्त्युत्तरकाले पेषणस्य प्रदेयसिद्धिप्रयो भावेनाप्राप्ततया स्वरूपमप्यदृष्टार्थं विधातव्यमिति भावः । अन्यथा, विना । तत्र च, प्रतिप्रसवविधौ च । अत एव, लाघवादेव । तद्धर्मा मथनधर्माणाम् । कार्यान्तरप्रयुक्तत्वकल्पनादौ, चातुर्मास्यापूर्वप्रयुक्तत्व नादौ । इष्यते चायमर्थ इत्यस्य कल्पनादावित्यत्रान्वयः । अत एव चरु मित्यत्र अत एवेत्यस्य पिष्टापिष्टद्रव्यप्रकृतिकत्वादेवेत्यर्थः । (व्याघातकत्वमिति चरुत्वस्येति शेषः ॥ १४ ॥

पेषणविषयकं चिन्तान्तरं पुनः प्रसङ्गात्क्रियते । **एकस्मिन्नेकसंयो गात्** ॥ एकस्मिन् एकदेवताके पेषणं स्यात् एकस्य पूष्ण एकस्यैव देव संयोगादिति सूत्रार्थः । सापि, लक्षणापि । (पूषाधिष्ठानकदेवतात्वप्रयोज्यापूर्व यत्वेति ।) पूषाधिष्ठानकं च तत् देवतात्वप्रयोज्यापूर्वीयत्वं चेति विग्रहः; पूष स्वसमानाधिकरणं देवतात्वाधीनापूर्वसाधनत्वमिति यावत्; तथा चापूर्वसाधन- त्वस्य पूषवृत्तित्वस्वीकारे देवतात्वस्य द्विदेवत्ये व्यासज्ज्यवृत्तित्वेऽप्यपूर्वसाधन- पूषाधिष्ठानस्य सत्त्वात्पेषणापत्तिरिति भाव । तत्रैव, व्यासज्ज्यवृत्तिदेवता

ग्व । (अगमकत्वमिति ।) नेमपिष्टवाक्यस्येति भाव: ॥ १९ ॥

न्मश्रीमण्डलमण्डनायमानचोलदेशाग्रपूज्यविद्वत्समाजविराजमानतिरुविशलूर-
जीन्द्रपुरवास्तव्यानां श्रीभगवत्कलावतारााणां सर्वतन्त्रस्वतन्त्राणां श्रीमदश्व-
नारायणशास्त्रिणां पौत्रैस्तादृशानामेव रामशंकरशास्त्रिणां तनूभवैः पण्डित-
वराग्रगण्यसर्वतन्त्रस्वतन्त्राणां श्रीशिवरामशास्त्रिणां सकाशादधीतनि-
खिलशास्त्रैर्महामहोपाध्यायबिरुदाङ्कितैः श्रीरामसुब्रह्मण्यशास्त्रिभि-
र्विरचितायां भाट्टकल्पतर्वभिधायां भाट्टदीपिकाव्याख्यायां
तृतीयाध्यायस्य तृतीय. पाद. ।

